अथशुक्लयजुःशाखीयकर्मकाण्डप्रदीपपरिशिष्टरूप-

# यजुःशाखीयशान्तिकाण्डप्रदीपः ।



मूल्यं १। सपादरूप्यकम्.

# मंगलमुपोद्घातश्च

श्रीगणेशाय नमः । ॐ नमः श्रीवेदपुरुषाय ।

व्याप्तं यद्भुवनत्रयस्थिरचरान्तर्वस्तुजातेऽपि यत्ख्यातं पंचवटीकृतास्पदमिति श्रीनासिके गौतमी ॥
यत्सान्निध्यवशादलं जनिमतां भोगापवर्गप्रदा मूर्ताऽऽस्ते समुपास्महे किमपि तद्रामाभिधानं महः ॥१॥
प्रारंभे कुलदेवतामिह महालक्ष्मीयुतां रेणुकां भक्ताभीष्टकरीं मतिस्मृतियशोऽर्थायुःपरानंददां ॥
प्रत्यूहौघविदारणक्षममथो द्वैमातुरं शारदां सूर्यं शुक्लयजुःप्रवर्तकमृषिं श्रीयाज्ञवल्क्यं नुमः ॥ २ ॥
नत्वा कात्यायनर्ष्यादीन्नूत्नोऽयं तन्यतेऽधुना ॥ कर्मकाण्डप्रदीपस्य परिशिष्टस्वरूपतः ॥
जननशांतिकाण्डाख्यः प्रदीपो वाजिनां कृते ॥ ३ ॥
पुराणमित्येव न साधु सर्वं नूत्नं गुणाढ्यं किमु नादरार्हं॥यद्यस्ति नूत्नेऽपि हि दोषलेशो न गृह्यते शैवलतः किमंबु ॥४॥
ग्रन्थेषु सत्स्वपि बहुप्रतनेषु कोऽयमाडम्बरो नवकृताविति चेद्वदामः ॥
कस्तेषु भूरिविषयः सुलभोऽखिलानां दृग्गोचरो भवति नो किमु चेद्गुणाढ्यः ॥ ५ ॥
मीमांसाधर्मशास्त्रक्रतुविधिनिपुणाः प्राक्तनैर्यैर्निबंधैरच्छिद्रं पारयंति स्वमतिविभवतस्तत्कृते नैष यत्नः ॥
हीना ये प्राङ्निबंधैरतिलघुधिषणाः साधितुं शांतिकाण्डमिच्छन्त्यद्धा तदर्थं विविधविधियुतं ग्रथ्यते शांतिकांडम्॥६

# प्रास्ताविकं किंचित् ।

यथा शस्त्रप्रहाराणां कवचं विनिवारकम् । तथा दैवोपघातानां शांतिर्भवति वारणम् ॥ १ ॥

( मलमासप्रकरणे )

प्रथिततरमेवास्ति कर्मकाण्डमधिगन्तॄणां तदनुष्ठातॄणां च । यत्कर्मभूमिरिति विततयशस्यस्मिन्भारते वर्षे उत्पद्यमानो यः कोऽपि मर्त्यजीवो विशेषतस्त्रैवर्णिकेषु जनिमाञ्जीवः "चित्रकर्म यथाऽनेकैरंगैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्विद्धि संस्कारैर्मंत्रपूर्वकैः" इति । एतद्वचोगतं ब्राह्मण्यपदमत्र क्षत्रियत्ववैश्यत्वयोरुपलक्षणं मंतव्यं । अनया पराशरोक्त्या निषेकादिपितृमेधान्तैर्ब्राह्मैः संस्कारैरात्मानं संस्कृत्यैवाग्रे पाकयज्ञाग्निहोत्रतत्साध्येषु दैवेषु संस्कारकर्मस्वधिकारितां प्रपद्यते । एवमधिकारसंपन्नः पुमानेव कर्मोपास्तिज्ञानरूपां त्रिविधां वैदिकीं मार्गत्रयीमयीं त्रिपथगामवगाह्य कैवल्यपदभाग्भवतीति ।

परंचात्र निषेकादिसंस्कारत्रयादनंतरं जातकर्मणश्च पूर्वं दैववशात्प्राग्जन्मीयदुष्कृतातिरेकेण जननसमये लब्धकालकृतनिमित्तविशेषाच्च यदि कदाचिद्दैवोपघात उपजायेत तदा तस्योपशमः परमावश्यकतया कर्तव्यतापदवीमधिरोहति । तदेव च शिरोनिर्दिष्टवचसा दृष्टांत-सहितं निरूपितमस्ति ।

तत्र शांतिरिति किमित्याकांक्षायां किंचिद्विविच्यते । "शांतिर्नाम=उपद्रवनिवारणं" इति सर्वे याज्ञिकप्रवरा वदंति । सचोपद्रवोप्यने-कधा दृश्यते । जननमरणसमये कालकृतनिमित्तविशेषसूचितः प्रसवविलयविकृतिसूचितो विवाहोपनयनादिशुभकार्यावसरे दैविकमानु-पिकाकस्मिकापत्त्युत्पत्तिसूचित आयुःक्रमाद्विशिष्टवयोऽवस्थासूचितो गोचरविलग्नादिस्थग्रहदौस्थ्यादिसूचितो दुःस्वप्नसूचितः परैरनुष्ठिताभि-



चारमूलकः कायवाङ्मनोविकृतिभूताधिनिमित्तक इत्यादिभेदात् । एषां सर्वेषामुपद्रवाणां निदानभूतनिमित्तभेदेन स्वरूपतो भिन्नत्वेऽपि फलतोऽभेद एव सिध्यति । सर्वेभ्य उपद्रवेभ्य एकस्यैहिकानिष्टहेतुभूतपापरूपस्य फलस्यैवोत्पद्यमानत्वात् । तन्निवर्तकं यत्कर्म सा शांतिरित्यभिधीयते कर्ममर्मकोविदैः । शांतेर्निष्कृष्टलक्षणंतु शांतिमयूखे कृतमस्ति । तद्यथा "अस्पष्टपापनिदानकैहिकमात्रानिष्टनिवर्तकं पापाप्रयोजकं वैधं कर्म शांतिकं" इति ज्ञेयम् । लक्ष्ये लक्षणसंगतिस्तु मूलग्रंथे ग्रंथारंभ एव द्रष्टव्या नात्र विस्तरभिया पुनरुच्यते । सा शांतिरप्युपद्रवगतस्वरूपोपशमकरणलक्षणस्वस्वभावेन भिन्ना सत्यप्यैहिकानिष्टहेतुभूतपापनिवर्तकफल एव पर्यवसानादेकैवेति वक्तुं शक्यते तथापि शांतेरनुष्ठेयानि स्वरूपाणि भिन्नानीति नापह्नोतुं शक्यानि । तान्येवात्रोपादेयान्यतस्तद्गतं भिन्नत्वं विवक्षणीयं भवति ।

तेच भेदाः—जननशांतयो मरणशांतयो वयोऽवस्थाशांतयो ग्रहशांतयो दुःस्वप्नशांतयो रोगपरिहारशांतय उत्पातशांतयोऽद्भुतशांतयोऽभिचारनिवर्तकशांतय इत्येवं बहुप्रकारकाः शांतयः शांतिविषयकमहानिबंधेषूक्ताः संति ।

तेषां मध्ये या जननशांतयस्ताः साकल्येन वयोऽवस्थाशांतयश्चावश्यकताऽनुसारेण विरलविरलाः संग्रहीता अत्र जननशांतिककाण्डेऽस्माभिः । एतासामेव संग्रहणप्रयोजनंतु जननमनुक्षणोत्पन्नदैवोपघातोपशमकरणादृतेऽग्रेतना जातकर्माद्याः संस्काराः फलोन्मुखा न भवंति प्रागुक्तप्रतिबंधैरावृतत्वात् । यतश्च कर्मकाण्डप्रदीपे निषेकादिपितृमेधान्ताः षोडश ब्राह्माः संस्कारा उक्ताः । तत्संबद्धास्तन्मध्य एवानुष्ठेयतया प्रतिष्ठां लभमाना या जननशांतयो वा वयोऽवस्थाशांतयस्तासां संग्रहोऽत्यन्तमावश्यकोऽपि विस्तरभिया नाकारि । अतस्तासामेव संग्रहोऽत्र न्याय्यः । आभ्योऽन्याः शांतय आकरग्रंथतो ज्ञेयाः ।

अन्यच्च शांतिकमलाकरशांतिमयूखशांतिसारशांतिप्रकाशशांत्युद्योतादिशांतिविषयकमहानिबंधेषु सत्सु किंप्रयोजनमस्य ग्रंथस्येति चेदत्र

ब्रूमहे । उक्तनिबंधानां बहुविधशांतिसमुदायसमाकुलतयाऽतिविस्तृतत्वात्प्रायः सर्वशाखीयशास्त्रार्थावगुंठितत्वाद्बह्वृचशाखैकमात्रप्रयोगग्रथितत्वाच्च शुक्लयजुषां तेभ्यः सकाशाद्यादृगुपयोगापेक्षाऽस्ति न तादृगुपयुक्ता भवंति ते ।

अतस्तेषां शुक्लयजुर्विदामपेक्षितोपयोगाकांक्षापूरणायैवायं जननशांतिकांडप्रदीपः कर्मकांडप्रदीपपरिशिष्टतया निरमाय्यस्माभिः । किंच कर्मकाण्डप्रदीपप्रकाशनावसरे तदीयप्रस्तावनायां समाश्वासितमासीद्यदनुपदमेवात्र कर्मकाण्डप्रदीपे विस्तरभयात्परित्यक्तो जननशांतिसंग्रहः परिशिष्टरूपेण पृथङ्मुद्रयित्वा प्रकाशतामेष्यतीति तदपि पालनीयमिति कृत्वा निरमायीदं जननशांतिकप्रकरणमित्यवगंतव्यम् ।

अमुं ग्रंथमुपयुञ्जाना याज्ञिकप्रवरा निबंधांतरनैरपेक्ष्येण शांतिकप्रयोगांस्तदनुग्राहकशास्त्रार्थादीतिकर्तव्यताभागांश्च सुलभतया पारयेयुरिति सुदृढं विश्वसिमः ।

अस्य ग्रंथस्य संशोधनसंस्करणादिषु निर्णयसागरस्थप्रधानशास्त्रिवर्यैः पंडितश्रेष्ठैर्वासुदेवशास्त्रिपणशीकरमहोदयैर्वार्धक्येऽसह्यभूतं कायक्लेशमगणयित्वा केवलं सुहृद्भावेन यत्साहाय्यमकारि तन्न कदापि विस्मरामो वयं । तथा निर्णयसागरमुद्रणालयाध्यक्षैः श्रेष्ठिभिः पांडुरंग जावजीमहोदयैरप्यस्य ग्रंथस्य मुद्रणाय हस्तावलम्बनं कृत्वा बहूपकृतं तदप्यभीक्ष्णं स्मरामः ।

यदत्र न्यूनातिरिक्तमन्यथाभूतं वा विदुषां दृक्पथमागच्छेत्तद्यदि तैः कृपयास्मदृष्टिपथमानीतं चेत्तत्पुनर्मुद्रणावसरे सम्यक्संशोधयाम इति संसूच्य विरमाम इति शिवम् ।

श्रीमन्नासिकक्षेत्रे
माघशुक्लवसंतपंचम्यां रविवासरे शालिवाहन-
शके १८५८ ता. १५।२।३७ इ.

विद्वदनुचरः
वारे इत्युपनामकः
अण्णा शास्त्री.

# विषयानुक्रमणिका.


| अ. अं. | विषयनाम. | पृष्ठं. |
|---|---|---|
| १ | मंगलमुपोद्घातश्च ... ... ... | १ |
| १ | प्रथमं शांतिकलक्षणं ... ... ... | १ |
| २ | गोमुखप्रसवशांतिशास्त्रार्थः ... ... | १ |
| ३ | गोमुखप्रसवप्रयोगः ... ... ... | २ |
| ४ | तिथिप्रसवशांतयस्तत्रकृष्ण-चतुर्दशीशांतिशास्त्रार्थः ... ... ... | ४ |
| ५ | कृष्णचतुर्दशीजननशांतिप्रयोगः ... ... | ५ |
| ६ | सिनीवालीकुहूदर्शजननशांति-निर्णयशास्त्रार्थः ... ... ... | ७ |
| ७ | सिनीवालीकुह्वोर्दर्शेचोक्तयोः-शांत्योर्व्यवस्था ... ... ... | ९ |
| ८ | सिनीवालीकुहूशांतिशास्त्रार्थः ... ... | ९ |
| ९ | सिनीवालीकुहूशांतिप्रयोगः ... ... | ११ |
| १० | दर्शशांतिशास्त्रार्थः ... ... ... | १२ |
| ११ | दर्शशांतिप्रयोगः ... ... ... | १२ |
| १२ | पौर्णमासीकृष्णाष्टमीपर्वणोर्ज-ननशांतिशास्त्रार्थः ... ... ... | १३ |
| १३ | तत्प्रयोगश्च ... ... ... ... | १३ |

| अ. अं. | विषयनाम. | पृष्ठं. |
|---|---|---|
| १४ | कातीयपरिशिष्टोक्तमूलजनन-शांतिशास्त्रार्थस्तत्प्रयोगश्च ... ... | १४ |
| १५ | कातीयपरिशिष्टोक्तआश्लेषा-नक्षत्रजननशांतिशास्त्रार्थः ... ... | १७ |
| १६ | तत्प्रयोगश्च ... ... ... ... | १७ |
| १७ | ज्येष्ठानक्षत्रजननशांतिशास्त्रार्थः ... ... | १९ |
| १८ | ज्येष्ठानक्षत्रजननशांतिप्रयोगः ... ... | २१ |
| १९ | उत्तरा, फल्गुनी, तिष्य, चित्रा, पूर्वा-षाढा, नक्षत्रजननिनिमित्तकतयैत-न्नक्षत्राधिकरणकतिथिगंडांतज-ननिमित्तकशांतिशास्त्रार्थः ... ... | २२ |
| २० | पुष्यनक्षत्रजननशांतिप्रयोगः ... ... | २३ |

| अ. अं. | विषयनाम. | पृष्ठं. |
|---|---|---|
| २१ | उत्तराफल्गुनीनक्षत्रजनन-शांतिप्रयोगः... ... ... ... | २४ |
| २२ | चित्रानक्षत्रजननशांतिप्रयोगः ... ... | २५ |
| २३ | मानवीयसंहितायां प्रयोगपारि-जातेच चित्रोडुजननशांतिप्रयोगः ... | २५ |
| २४ | अंधनक्षत्रजननशांतिप्रयोगः ... ... | २६ |
| २५ | रेवतीमघानक्षत्रजननशांतिप्रयोग ... | २७ |
| २६ | अश्विनीनक्षत्रजननशांतिः ... ... | २७ |
| २७ | पूर्वाषाढानक्षत्रजननशांतिः ... ... | २७ |
| २८ | एकनक्षत्रजननशांतिशास्त्रार्थः ... ... | २८ |
| २९ | एकनक्षत्रजननशांतिप्रयोगः ... ... | ३७ |
| ३० | तिथिवारनक्षत्राणां विषघटीषु-जनने शांतिशास्त्रार्थः ... ... ... | ३८ |

| अ. अं. | विषयनाम. | पृष्ठं. |
| --- | --- | --- |
| ३१ | विषनाडीजननशांतिप्रयोगः ... ... | ३९ |
| ३२ | त्रिकप्रसवशांतिशास्त्रार्थः ... ... | ४० |
| ३३ | त्रिकप्रसवशांतिप्रयोगः ... ... | ४१ |
| ३४ | सूर्यचंद्रग्रहणजनने स्त्रीणां ग्रहणे प्रथमरजोदर्शनेच शांति-विषयकः शास्त्रार्थः ... ... ... | ४५ |
| ३५ | अस्याः शांतेः प्रयोगश्च ... ... ... | ४६ |
| ३६ | सिंहार्के गोःप्रसूतौ, पौषेमासे बुधवासरेच महिषीप्रसूतौ, दिवा अश्वतरीप्रसूतौ, श्रावणे मासि दिवा अश्विनीप्रसूतौ, पौषे मासि भार्याप्रथमप्रसूतौच कर्तव्यशांतिशास्त्रार्थः ... ... ... | ४७ |
| ३७ | एतत् ( अमृताख्य ) शांतिप्रयोगः ... | ४८ |
| ३८ | योगजननशांतयस्तत्र पंचदशगंडांत-शांतिशास्त्रार्थः ... ... ... | ५० |
| ३९ | गण्डयोगजननशांतिप्रयोगः ... ... | ५४ |
| ४० | गण्डयोगानां नक्षत्राधिकरणकगण्डानां चानुक्रमणिका ... ... ... | ५६ |
| ४१ | व्यतीपातवैधृतिरविसंक्रमण-योगजननशांतिशास्त्रार्थः... ... ... | ५६ |
| ४२ | एतत्प्रयोगः ... ... ... ... | ५८ |
| ४३ | प्रसववैकृतशांतयस्तत्र प्रथमं यमलप्रसवशांतिः ... ... ... | ५९ |
| ४४ | निरग्निकस्य यमलजननप्रायश्चित्तपरिशिष्टं मूलमात्रं ... ... ... | ५९ |

| अ. अं. | विषयनाम. | पृष्ठं. |
|---|---|---|
| ४५ | आहिताग्नेर्यमलप्रसवप्रायश्चित्तं ... ... | ५९ |
| ४६ | अनाहिताग्नेर्यमलप्रसवप्रायश्चित्तं ... ... | ६० |
| ४७ | ग्रंथकर्तृप्रणीतयमलजननप्रायश्चित्तपरिशिष्टभाष्यं यामलचरुपरिशिष्टभाष्यं चेति ... ... ... | ६० |
| ४८ | यमलजननशांतिप्रयोगः ... ... | ७१ |
| ४९ | वैकृतप्रसवशांतिप्रयोगश्च ... ... | ७१ |
| ५० | भार्यागवादीनां प्रसववैकृतानि ... ... | ७३ |
| ५१ | देवताप्रतिमागृहप्रासादादीनां वैकृतानि ... ... ... ... | ७३ |
| ५२ | जलाशयवैकृतानि ... ... .... | ७४ |
| ५३ | अग्निवैकृतानि .... .... .... | ७४ |
| ५४ | वृक्षवैकृतानि .... .... .... | ७४ |
| ५५ | उपस्करवैकृतानि .... .... .... | ७४ |
| ५६ | वृष्टिवैकृतानि.... .... .... .... | ७४ |
| ५७ | मृगपक्षिवैकृतानि .... .... .... | ७५ |
| ५८ | दिव्या उत्पाताः .... .... .... | ७५ |
| ५९ | आंतरिक्षा उत्पाताः .... .... .... | ७५ |
| ६० | भौमा उत्पाताः .... .... .... | ७५ |
| ६१ | एषु सर्वेष्वियमेव यमलजननपरिशिष्टोक्ता शांतिः .... .... .... | ७५ |
| ६२ | अस्या एव शांतेर्यामली शांतिरद्भुतशांतिरुत्पातशांतिर्वैकृतशांतिरुपसर्गशांतिरिति नामांतराणि .... | ७६ |

| अ. अं. | विषयनाम. | पृष्ठं. |
|---|---|---|
| ६३ | अधोमुखजननशांतिः .... .... .... | ७६ |
| ६४ | सदंतजननशांतिः .... .... .... | ७६ |
| ६५ | अदंतजनने सदंतजननेऽपि उपरि प्रथमं दंतोत्पत्तौ शांतिः .... .... | ७६ |
| ६६ | सदंतादंतजननयोरपि द्वितीयतृतीयचतुर्थपंचमान्यतममासे पुनर्दंतोत्पत्तौ साप्ताहिकी शांतिः .... .... | ७६ |
| ६७ | सदंतादंतजननयोरपि षष्ठेऽष्टमे वा मासि पुनर्दंतोत्पत्तौ बृहस्पत्युक्ता शांतिः .... .... .... | ७६ |
| ६८ | दंतजननसामान्ये पंचदशी शांतिः .... | ७७ |
| ६९ | भागिनेयबालकस्य प्रथममुपरिदंतजनने ब्रह्मयामलोक्ता मातुलकर्तृका शांतिः .... .... .... | ७७ |
| ७० | पादजाते ( पायाळु ) यामली शांतिः .... | ७८ |
| ७१ | कदलीदुष्टप्रसवशांतिः .... .... | ७८ |
| ७२ | षष्ठितम ६० वर्षे औग्ररथीशांतिशास्त्रार्थः .... .... .... .... | ७८ |
| ७३ | औग्ररथीशांतिप्रयोगः .... .... .... | ७९ |
| ७४ | सप्तत्यब्दि ७० का भैमरथी शांतिः .... | ८१ |
| ७५ | भैमरथीशांतिप्रयोगः .... .... | ८३ |
| ७६ | द्वादशाब्दादूर्ध्वमवलोकनविधिरूपाघोरग्रहशांतिः .... .... .... | ८४ |
| ७७ | अघोरग्रहशांतिप्रयोगः .... .... .... | ८६ |

| अ. अं. | विषयनाम. | पृष्ठं. |
| --- | --- | --- |
| ७८ | शौनकोक्तः सामान्यानामदृष्टपूर्वाणां सगोत्रासगोत्रसपिण्डानां द्वादशाब्दादूर्ध्वं देशांतरादागतानां द्वादशाब्दादूर्ध्वंचावलोकनविधिरूपा ऐन्द्री शांतिः .... .... .... | ८८ |
| ७९ | प्रपौत्रमुखावलोकनविधिः .... .... | ९० |
| ८० | याज्ञवल्क्योक्तकेवलग्रहयज्ञशास्त्रार्थः .... .... .... | ९० |
| ८१ | याज्ञवल्क्योक्तस्य केवलग्रहयज्ञस्य प्रयोगः .... .... .... | ९२ |
| ८२ | ग्रंथप्रणयनकालः .... .... .... | ९३ |
| ८३ | ग्रंथसमाप्तिश्लोकः .... .... .... | ९३ |

समाप्ता चेयं विषयानुक्रमणिका.

# ॥ शुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिप्रकरणम् ॥

तत्र प्रथमं शांतिकलक्षणं शांतिमयूखे अस्पष्टपापनिदानकैहिकमात्रानिष्टनिवर्तकं पापाप्रयोजकं वैधं कर्म शांतिकमित्युच्यते क्षयादिहरदानादावतिप्रसंगं वारयितुं निदानकांतं। आमुष्मिकानिष्टनिवर्तकेऽतिप्रसंगं वारयितुमैहिकेति। प्रायश्चित्तं वारयितुं मात्रपदं प्रायश्चित्तं त्वामुष्मिकानिष्टनिवर्तकमपीति नातिप्रसंगः। अभिचारप्रत्यभिचारादावतिप्रसंगं वारयितुं पापाप्रयोजकमिति। तयोः फलतो हिंसात्वेन तदनुष्ठाने प्रायश्चित्तोक्तेश्च पापप्रयोजकत्वात्। इति ॥

## ॥ तत्रादौ गोमुखप्रसवशांतिः ॥

सर्वारिष्टशांतिसाधारणत्वात् गोमुखप्रसवस्तावदादौ वक्ष्यते-श्रीः ॥ गर्गः—प्रणिपत्य रविं वक्ष्ये प्रायश्चित्तमनुस्मरन् ॥ सर्वारिष्टविनाशाय यदुक्तं ज्योतिषार्णवे ॥ पित्ररिष्टे सुतारिष्टे मात्ररिष्टे तथैव च ॥ प्रायश्चित्तं ततः कुर्यात्तद्दोषस्य शांतये ॥ यन्नक्षत्रादावुत्पत्त्या पित्राद्यरिष्टं सूच्यते तद्दोषशांतये गोमुखप्रसवसंज्ञं प्रायश्चित्तं कुर्यादित्यर्थः ॥ पौष्णाश्विन्योर्गुरौ सार्पमघाचित्रैंद्रमूलभे ॥ एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥ पौष्णं रेवती। गुरुः पुष्यं। सार्पं आश्लेषा। ऐंद्रं ज्येष्ठा। अश्विनीमघाचित्रामूलानि प्रसिद्धान्येव॥ तथाशब्दः समुच्चयार्थः॥ तेन पित्ररिष्टादौ तन्नक्षत्रादिशांतिं कृत्वा-एतच्च कुर्यादित्यर्थः॥ पित्ररिष्टे-

त्यनेनैव मूलादावपि प्राप्तेः पुनर्मूलादिग्रहणं यत्र मूलादेश्चतुर्थपादादौ तदभावस्तत्रापि तत्प्राप्त्यर्थं ॥ नतु तदन्या काचन शांतिः। अनुक्तत्वात् ॥ यथा अश्विनीमघारेवतीषु नक्षत्रशांत्यभावेऽपि गोमुखप्रसवशांतिरेव कार्या ॥ तथा पुष्ये द्वितीयतृतीयचरणयोर्जनने गोमुखप्रसवो गार्ग्योक्ता शांतिश्च। प्रथमचतुर्थचरणयोस्तु गोमुखप्रसवः-अंत्यभजननत्वात् केवलग्रहयज्ञमात्रं-न शांतिः। चित्रायां प्रथमद्वितीयचरणयोर्गोमुखप्रसवः शांतिश्च । तृतीयचतुर्थचरणयोर्गोमुखप्रसवमात्रं न शांतिः। तत्तदृक्षचरणेषु दुष्टत्वात् "उत्तरातिष्यचित्रर्क्षेतिवचनेन" गार्ग्येण तत्र शांतेरुक्तत्वादिति ॥ यद्यपि तथाशब्दस्य समुच्चयार्थकत्वादेव गोमुखप्रसवः शांतिकात्पूर्वं पश्चाद्वा कार्य इत्यर्थः संपन्नो भवति तथापि व्यतीपातवैधृतिसूर्यसंक्रमणजननशांतौ। गोमुखप्रसवं कुर्याच्छांतिं कुर्यात् प्रयत्नतः। इत्युपक्रम्य अग्रे प्रथमं गोमुखाज्जन्म। ततः शांतिं समारभेदितिचोत्तरगार्ग्यवचनेन पाठक्रमादेव प्राथम्ये सिद्धे पुनः प्राथम्यविधानेन इतरशांतिषु गोमुखप्रसवस्य प्राथम्यं नियम्यत इति शांतिसारः। तत्रापि उभयोः कालैक्येन-प्राथम्यनियमः किंतु-कालभेदेन शांतिकात्पूर्वं पश्चाद्वा जन्मर्क्षे वा त्रिजन्मर्क्षेत्यादौ स्वकाले एव प्राथम्यनियमः इत्यवगन्तव्यं। कमलाकरोपि—नचादृष्टार्थत्वात्समुच्चयो नेतिशंक्यं ॥ एकप्रकरणाधीतत्वाभावात् ॥ अतएव गोप्रसवस्य शांत्या साकं विकल्पापत्तिरपि न ॥ किंच। पूर्वस्मिन् वाक्ये तत्तदितिपदं देहलीदीपन्यायेन प्रायश्चित्तमित्यत्राप्यन्वेति। तेन च तादृशनक्षत्रोत्पत्त्या सूचिते पित्राद्यरिष्टे गोमुखप्रसवप्रायश्चित्तं। तत्तद्दोषशांत्यै एतत् प्रायश्चित्तं शांतिकं च कुर्यादित्यर्थ इति ॥ ॥ कालमाह—जन्मर्क्षे वा त्रिजन्मर्क्षे शुभवारे शुभे दिने ॥ विधिमाह—कृत्वाऽभ्यंगादिकं सर्वं गृहालंकारपूर्वकं ॥ गोमयेनोपलिप्याथ गृहस्यैशानभागके ॥ पंकजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः ॥ व्रीहींस्तत्र विनिक्षिप्य यथावित्तानुसारतः ॥ नवशूर्पे तु तन्मध्ये

रक्तवस्त्रं प्रसारयेत् ॥ स्नपयित्वा शिशुं तत्र पुनः सूत्रेण वेष्टयेत् ॥ प्राङ्मुखं तमवाक्पादं तिलगर्भगतं शिशुं ॥ गोमुखं दर्शयित्वा तु पुनर्जातं तु गोमुखात् ॥ विष्णुर्योनिमिति सूक्तेन गव्येन स्नापयेच्छिशुं ॥ गवामंगेषु[1] मंत्रेण गवामंगेषु संस्पृशेत् ॥ विष्णोः श्रेष्ठेन मंत्रेण गोप्रसूतं तु बालकं ॥ आचार्यस्तु समादाय पश्चान्मात्रे ददेत्तदा । माता[2] जघन्यभागस्था शिशुमानीय तन्मुखात् ॥ ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् ॥ वस्त्रं स्थाप्य पितास्याथ पुत्रस्य मुखमीक्षयेत् ॥ स्थाप्य निष्काश्य ॥ गोमूत्रं गोमयं क्षीरं दधिसर्पिश्च संयुतं ॥ आपोहिष्ठादिभिर्मंत्रैरभिषिंचेत्ततः शिशुं ॥ मूर्ध्नि चाघ्राय तं पुत्रं तन्मंत्रेण तदा पिता ॥ अंगादंगात्संभवसि हृदयादधिजायसे ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतमिति ॥ मूर्द्धनि त्रिरवघ्राय तं शिशुं स्थापयेत्ततः ॥ पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः ॥ अत्र स्वशाखोक्तमार्गेण पुण्याहवाचनं कुर्यादिति केचित् ॥ पुण्याह-शब्दमात्रं वाचयेदित्यपरे ॥ दरिद्रायाथ विप्राय तां गामभ्यर्च्य दापयेत् ॥ गोवस्त्रस्वर्णधान्यानि दद्यादर्कादितः क्रमात् ॥ यथाशक्ति धनं दद्याद्ब्राह्मणेभ्यस्तदा पिता ॥ ततो होमं प्रकुर्वीत स्वस्वशाखोक्तमार्गतः ॥ उल्लेखनादिकं कृत्वाथाज्यभागांत-माचरेत् ॥ होमस्यैशानदिग्भागे धान्योपरि शुभं घटं ॥ पंचगव्यं घटे स्थाप्य तिलांस्तत्र विनिक्षिपेत् ॥ क्षीरद्रुमकषायांश्च पंचरत्नानि निक्षिपेत् ॥ वस्त्रयुग्मेन संछाद्य गंधादिभिरथार्चयेत् ॥ विष्णुं वरुणमभ्यर्च्य प्रतिमायां विधानतः ॥ अत्र प्रतिमां च विधानत इति क्वचित्पाठः । प्रतिमा यक्ष्मघ्न्यः । अग्रे तदैवत्यहोमविधानात् चकाराचेति केचित् ॥ तन्न । विष्ण्वादिपूजायां प्रतिमानियमसंभवे अपूर्वपूजांतरविधिकल्पनस्यान्याय्यत्वात् ॥ चकारस्य विधानशब्दोक्ततत्तदुचितेतिकर्तव्यतानिरूपितसमुच्चयार्थ-

---

१. गो वामांगेषु इति वा पाठः ॥ २ माताजघन्यभागस्थेत्यग्रिमवचनात् पश्चाद्गोपुच्छसमीपे स्थितायै मात्रे इत्यर्थः ।

त्वादिति कौस्तुभे ॥ प्रतिमा रूपं इति शांतिसारे ॥ यत इंद्रादिभिर्मंत्रैः कुंभं स्पृष्ट्वाभिमंत्रयेत् ॥ यतइंद्रेति षड्चस्य सूक्तस्य
ग्रहणं ॥ आश्वलायनेन यतइंद्र भयामह इति सूक्तशेषमिति भयनिरसनार्थत्वेन षड्चस्योक्तत्वात् ॥ दधिमध्वाज्ययुक्तेन होमं कुर्या-
द्विधानतः ॥ युक्तेनेति भावे क्तः ॥ दधिमध्वाज्यानां योगेनेत्यर्थः ॥ आपोहिष्ठेति तिसृभिरप्सुमे सोम इत्यथ ॥ तद्विष्णोः परमं
पदमक्षीभ्यामिति सूक्ततः ॥ ऋग्भिराभिः प्रत्यर्चमष्टाविंशतिसंख्यया ॥ अशक्तावष्टसंख्यं वा दधिमध्वाज्यसंयुतं ॥ आदित्यादिग्रहाणां
च होमं कुर्यात्समंत्रकं ॥ आदित्यादिग्रहाणां च दधिमध्वाज्यसंयुतं समंत्रकं होमं कुर्यादित्यन्वयः ॥ अन्यथा पुनर्दध्यादिग्रह-
णस्य वैयर्थ्यापत्तेरिति दर्पणे दीक्षिताः ॥ इति गर्गोक्ता गोमुखप्रसवशांतिः ॥

अथ गोमुखप्रसवप्रयोगः—बालकस्य जन्मर्क्षे तदारभ्य गणनेन दशमैकोनविंशयोर्वा नक्षत्रयोः । तदसंभवे कृत्तिकादि-
विशाखांतदेवनक्षत्रयुते शुभदिने वा शांतिकात्पूर्वमनंतरं वा गोमुखप्रसवः कार्यः ॥ संकल्पः—अस्य बालकस्य अमुकनक्षत्रो-
त्पत्तिसूचितारिष्टशांत्यर्थं गोमुखप्रसवं करिष्ये ॥ गणपतिपूजनं ॥ आचार्यवरणं ॥ गृहस्येशानदिग्भागे श्वेतचूर्णैः पद्मं कृत्वा ॥ तत्र
व्रीहिराशिं कृत्वा ॥ तत्र शूर्पं स्थापयित्वा ॥ शूर्पे रक्तवस्त्रं प्रसार्य ॥ तत्र तिलान् विकीर्य ॥ तत्र प्राङ्मुखमवाक्पादं शिशुं निधाय ॥
रक्तवस्त्रेणाच्छाद्य ॥ सशिशुं शूर्पं सूत्रेण वेष्टयित्वा ॥ शिशुसमीपे गोमुखमानीय ॥ प्रसवं विभाव्य ॥ विष्णुर्योनिमिति सूक्तेन
पंचगव्येन शिशुं स्नापयेत् ॥ ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणि पिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ गर्भंधे-
हिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजा ॥ हिरण्ययीअरणीयंनिर्मंथतोअश्विना ॥ तंतेगर्भं
हवामहेदशमेमासिसूतवे ॥ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां ॥ पुमांसंपुत्रानाधेहिदशमेमासिसूतवे ॥ गवामंगेष्विति

मंत्रेण गां सर्वांगेषु वामांगेष्वेव वा स्पृशेत् ॥ ॐ गवामंगेषु तिष्ठंति भुवनानि चतुर्दश ॥ यस्मात्तस्माच्छिवं मे स्यादिहलोके परत्र च ॥ तत आचार्यः शिशुं गृहीत्वा गोःपुच्छदेशे स्थितायै मात्रे विष्णोः श्रेष्ठेनेति मंत्रेण दद्यात् ॥ ॐ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां ॥ पुमांसंपुत्रानाधेहिदशमेमासिसूतवे ॥ माता तु बालमादाय गोमुखसमीपे बालं नीत्वा ॥ पुनरादाय ॥ गोपुच्छदेशे पश्चिमभागस्था सती पित्रे दद्यात् ॥ ततः पिता मात्रे दद्यात् ॥ ततः पिता आच्छादनमपसार्य पुत्रमुखमीक्षते ॥ ततः पंचगव्येनाचार्य शिशुमभिषिंचेत् ॥ ॐ आपोहिष्ठा०योवःशिव०तस्माअरं० ३॥ ततः पिता हस्तद्वयेन परिग्रहणपूर्वकं । ॐ अंगादंगात्संभवसि हृदयादधिजायसे ॥ आत्मावै पुत्रनामासि स जीव शरदः शतं ॥ इति मंत्रेण शिशोर्मूर्द्धनि त्रिरवघ्राय ॥ सकृन्मंत्रेण द्विस्तूष्णीं ॥ मंत्रे स इति पुंनिर्देशात् कन्यायास्तूष्णीमवघ्राणं ॥ यथास्थाने शिशुस्थापनं ॥ ततो वेदपारगैर्ब्राह्मणैः पुण्याहं वाचयेत् । शिशुमूर्धावघ्राणांते प्रयोगमध्य एव स्वस्वशाखोक्तं पुण्याहवाचनमिति कौस्तुभमयूखौ ॥ मूर्धावघ्राणांते पुण्याहं भवंतो ब्रुवंतु इत्येकवाक्यमेव त्रिर्वदेत् नतु शाखोक्तमिति कमलाकरः इति धर्मसिंधुः ॥ स्वशाखोक्तपुण्याहवाचनपक्षे तु भो ब्राह्मणाः अस्य बालकस्य गोमुखप्रसवाख्यस्य कर्मणः पुण्याहं भवंतो ब्रुवंतु ॥ अस्तु पुण्याहमिति प्रतिवचनं ॥ एवं कल्याणं । अस्तु कल्याणं ॥ ऋद्धिं अस्त्वृद्धिः॥ प्रसवाख्याय कर्मणे स्वस्ति भ० । अस्तु स्वस्ति ॥ श्रीरस्त्विति० अस्तु श्रीः ॥ इति त्रिर्वाचयेत् ॥ तां गामभ्यर्च्य दरिद्रब्राह्मणाय विधिना दद्यात् ॥ ततोऽन्यां गां वस्त्रस्वर्णधान्यानि यथाशक्ति अर्कादिप्रीत्यर्थं आचार्याय दद्यात् ॥ अन्येभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां दद्यात् ॥ ततोऽग्निस्थापनं ॥ अधिप्रत्यधिरहितं केवलनवग्रहस्थापनं ॥ दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि चरुवर्जं आज्यभागांतं ॥ ततोऽग्नेरीशान्यां ॐ महीद्यौरित्यादिविधिना कुंभं संस्थाप्य । तत्र पंचगव्यं तिलान् क्षीरद्रुमकषायांश्च क्षिप्त्वा । वस्त्रयुग्मेनावेष्ट्य । पूर्णपात्रे ॐ तद्वि-

ष्णोरिति विष्णुं ॐ तत्त्वायामीतिवरुणं च सौवर्णप्रतिमयोरग्न्युत्तारणप्राणप्रतिष्ठापूर्वकमावाह्य संपूज्य ॥ प्रतिमासु विष्णुवरुणयक्ष्म-हणः पूज्या इति मयूखे ॥ कुंभं स्पृष्ट्वा यतइंद्र इति षण्मंत्रैरभिमंत्रयेत् ॥ ॐ यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवञ्छग्धितवतन्न ऊतिभिर्विद्विषोविमृधोजहि ॥ त्वंहिराधस्पतेराधसोमहःक्षयस्यासिविधतः ॥ तंत्वावयंमघवन्निंद्रगिर्वणःसुतावंतोहवामहे ॥ इंद्रस्पलुतवृत्रहापरस्पानोवरेण्यः ॥ सनोरक्षिषच्चरमंसमध्यमंसपश्चात्पातुनःपुरः ॥ त्वन्नःपश्चादधरादुत्तरात्पुरइंद्रनिपाहिवि-श्वतः ॥ आरेअस्मत्कृणुहिदैव्यंभयमारेहेतीरदेवीः ॥ अद्याद्याश्वश्वइंद्रत्रास्वपरेचनः ॥ विश्वाचनोजरितॄन्सत्पतेअहादिवानक्तं चरक्षिषः ॥ प्रभंगीशूरोमघवातुवीमघःसंमिश्लोवीर्यायकं ॥ उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः ॥ ऋचः ६ ॥ एतैर्मंत्रैरभिमंत्र्य ॥ तत आचार्यः स्रुवेण मीलितदधिमध्वाज्येन होमं कुर्यात् ॥ इदमेव होमद्रव्यं सर्वत्र ॥ अपश्वतुर्वारं आपोहिष्ठेति तिस्रः अप्सुमेसोम इत्येकाचेति । प्रत्यृचमेकैकयाहुत्या ॥ तद्विष्णुरिति विष्णुमेकयाहुत्या ॥ यक्ष्महणं अक्षी-भ्यामिति सूक्तेन प्रत्यृचमष्टाविंशतिसंख्यया अष्टसंख्यया वा ॥ नवग्रहान् एकैकयाहुत्या ॥ शेषेण स्विष्टकृतमित्यादि ॥ इति कमलाकरो दर्पणश्च ॥ सर्वत्र प्रत्यृचमष्टाविंशतिरष्टौ वाहुतयः । इति मयूखकौस्तुभशांतिसारादयः ॥२॥ ॐ आपोहिष्ठा० चक्ष-सेस्वाहा ॥ इदं वरुणाय न ममेति चतुर्षु त्यागः । १ । ॐ योवःशिव० मातरःस्वाहा ॥ । २ । ॐ तस्माअरं० च नः स्वाहा । ३ । ॐ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ आपश्चविश्वभेषजीःस्वाहा ॥१॥४॥ सत्यपिवरुणहोमस्य वारुणत्वे अद्भ्य इत्येव त्यागः ॥ पार्वणहोमे पूर्णमासायेदमितिवदिति कौस्तुभः । नेदं कातीयानां । पार्वणहोमे तेषां तथा विधेरभावात् ॥ ॐ तद्विष्णोःपर० ततं-

स्वाहा ॥ इदंविष्णवे०॥१॥ ॐ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामितेस्वाहा ॥ इदं यक्ष्महणे नमम ॥ १ ॥ अयं त्यागः सर्वत्र ॥ ॐ ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् ॥ यक्ष्मंदोषण्यांसंसाभ्यांबाहुभ्यांविवृहामितेस्वाहा ॥ २ ॥ ॐ आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोहृदयादधि ॥ यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामिते स्वाहा ॥३॥ ॐ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामितेस्वाहा ॥४॥ ॐ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामितेस्वाहा ॥ ५ ॥ ॐ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामितेस्वाहा ॥६॥ इदं यक्ष्महणेनमम ॥ तत ॐ आकृष्णेनेत्यादिनवग्रहहोमः ॥ इदं सवित्रे सोमायेत्यादयस्त्यागाः ॥ ततः स्विष्टकृदादिहोमशेषं समाप्य ॥ ब्राह्मणभोजनं ॥ भूयसीदक्षिणादानं ॥ इतिशुक्लयजुःशाखीयकर्मकांडप्रदीपे गोमुखप्रसवप्रयोगः ॥

## अथ तिथिप्रसवशांतयः ॥

तत्र कृष्णचतुर्दशीजननशांतिः ॥ उत्तरगार्ग्यः—मंदरस्थं सुखासीनं गर्गं मुनिवरं शुभं ॥ नमस्कृत्वाथ पप्रच्छ शौनको मुनिपुंगवः ॥ शांतिकर्माणि सर्वाणि त्वत्तो जानाम्यहं पुरा ॥ अधुना श्रोतुमिच्छामि कृष्णपक्षचतुर्दशीं ॥ दिवा वा यदि वा रात्रौ प्रसूतेः किं फलं वद ॥ गर्ग उवाच ॥ कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलं ॥ चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतं ॥ द्वितीये पितरं हंति तृतीये मातरं तथा ॥ चतुर्थे मातुलं हंति पंचमे वंशनाशनं ॥ षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनं ॥ तस्मात्सर्वप्रयत्नेन शांतिं कुर्याद्विधानतः ॥

आचार्यं वरयेद्धीमान्पुत्रदारसमन्वितं ॥ स्वकर्मनिरतं शांतं श्रोत्रियं वेदपारगं ॥ सर्वालंकारसंयुक्तं सर्वलक्षणसंयुतं ॥ ब्राह्मणानृत्विजश्चैव स्वस्तिवाचनपूर्वकं ॥ रुद्रोऽधिदेवता तस्याः कर्षमात्रसुवर्णतः ॥ तदर्द्धेन च वा कुर्याद्वित्तशाठ्यविवर्जितः ॥ षोडशमाषाः कर्षः । तोळा इत्यर्थः ॥ "ते षोडशाक्षः कर्षोऽस्त्री" इत्यमरः ॥ तदर्द्धेन वेति । अर्द्धा तोळा वा इत्यर्थः ॥ प्रतिमां कारयेच्छंभोः सर्वलक्षणसंयुतां । वृषभे च समासीनं वरदाभयपाणिकं ॥ शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरान्वितं ॥ त्र्यंबकेन मंत्रेण पूजां कुर्याद्विधानतः ॥ स्थापयेच्चतुरः कुंभांश्चतुर्दिक्षु यथाक्रमं ॥ पुण्यतीर्थजलोपेतान् धान्यस्योपरि विन्यसेत् ॥ चतुर्दिक्षु आग्नेयीमारभ्य चतुर्षु विदिक्षु इत्यर्थः । आग्नेयकुंभमारभ्य पूजां कुर्याद्यथाक्रममित्यग्रिमवाक्यैकवाक्यत्वात् ॥ शतौषधानि निक्षिप्य श्वेतवस्त्रैश्च वेष्टयेत् ॥ शतौषधानि मूलशांतौ वक्ष्यंते ॥ शुभानि चैव पुष्पाणि श्वेतानि परिवेदयेत् ॥ तन्मध्ये स्थापयेत् कुंभं शतच्छिद्रसमन्वितं ॥ पंचमृत्पंचरत्नानि पंचत्वक् पंचपल्लवान् ॥ पंचधान्यं सुवर्णं च तत्तन्मंत्रैर्विनिक्षिपेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥ आवाह्य वारुणैर्मंत्रैरनेन च विधानतः ॥ वक्ष्यमाणैर्वारुणमंत्रैरिमंमेवरुणेत्यादिभिरनेन सर्वे समुद्राः सरितश्चेत्यनेनेत्यर्थः ॥ इमंमेवरुणेत्यनया तत्त्वायामीत्यृचा तथा ॥ त्वंनोअग्नइत्यनया सत्वंन इति मंत्रतः ॥ आग्नेयकुंभमारभ्य पूजां कुर्याद्यथाक्रमं ॥ आनोभद्राख्यसूक्तं च भद्राअग्नेश्च सूक्तकं ॥ जप्त्वा पुरुषसूक्तं च रुद्रं च क्रमाज्जपेत् ॥ क्रमादाग्नेयकुंभक्रमात् ॥ ईश्वरस्याभिषेकं च ग्रहपूजां च कारयेत् ॥ ईश्वरस्य पूर्वस्थापितरुद्रप्रतिमाया इत्यर्थः ॥ पूजाकर्मसु निर्वर्त्य होमं कुर्याद्विधानतः ॥ गेहस्येशानदिग्भागे कुंडं कुर्याद्विधानतः ॥ विस्तारायामखातं च अरत्निद्वयसंयुतं ॥ कुंडकंठं परित्यज्य समंतादंगुलिक्रमात् ॥ मेखलोच्छ्रायविस्तारश्चतुस्त्र्यंगुलिक्रमात् ॥ पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः ॥ योनिं षडंगुलां तिर्यग्द्वादशांगुलदैर्घ्यकां ॥ अश्वत्थदलसंकाशां किंचिदुन्नमितांगुलां ॥ द्विहस्तं

कुंडं । नवांगुलैस्तिस्रो मेखलाः । द्विसप्तत्यंगुल ७२ फलका योनिः । योनेः क्षेत्रफलं ७२ इदमयुतगुणितं ७२०००० । अयं सार्द्ध-त्रिनवकररसैर्भक्तव्यः ६२९३।४ भक्ते लब्धं ११४ अस्य मूलं १०।५ अयमेव योनेर्व्यासः । अनेन व्यासेन कुंडार्कोक्तयोनिकुंडवत् कार्या ॥ कुर्यादाघारपर्यंतं स्वगृह्योक्तविधानतः । आघारांतत्वोक्त्या आज्यभागौ नेति केचित् ॥ तन्न आघारयोराज्यभागयोरुपलक्ष-णत्वात् ॥ समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः । इतरेतरयोगद्वंद्वसमासात्तिलमाषा मिलितं द्रव्यं ॥ सर्षपैः सहितास्तिलमाषा इत्यर्थः । इति शांतिकमलाकरः प्रयोगदर्पणश्च ॥ सर्षपैः साहित्योक्त्या सर्षपाणां पृथग्द्रव्यत्वमिति शांतिसारः ॥ समिधो विशिनष्टि ॥ अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥ अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥ अष्टाविंशतिमेतैश्च होमं कुर्यात्पृथक् पृथक् ॥ त्र्यंबकेन मंत्रेण तिला व्याहृतिभिः क्रमात् ॥ ग्रहा एवं च होतव्या असदुक्तविधानतः ॥ एवं क्रमेण होतव्यं होमशेषं समापयेत् ॥ सर्वालंकारयुक्तानां त्रयाणामभिषेचनं ॥ त्रयाणां मातृपितृबालानां ॥ चतुर्भिः कलशैरद्भिर्बृहत्कुंभसमन्वितैः ॥ बृहत्कुंभः शत-च्छिद्रः ॥ धौतांबराणि धृत्वाऽथ कुर्यादाज्यावलोकनं ॥ पूर्णाहुतिं च जुहुयाद्यजमानः समाहितः ॥ तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् । सर्वालंकारसंयुक्तां सवत्सां गां पयस्विनीं ॥ प्रतिमां वस्त्रयुग्मं च आचार्याय निवेदयेत् ॥ ईश्वरप्रीतये भक्त्या कुर्याद्ब्राह्मण-भोजनं ॥ तस्मादनेन विधिना वित्तशाठ्यविवर्जितः ॥ एवं यः कुरुते शांतिं सर्वपापैः प्रमुच्यते ॥ सर्वान् कामानवाप्नोति चिरंजीवी सुखी भवेत् ॥ इति उत्तरगार्ग्योक्ता कृष्णचतुर्दशीजननशांतिः ॥

अथ कृष्णचतुर्दशीजननशांतिप्रयोगः ॥ श्रीः ॥ चतुर्दश्याः षड्भागाः ॥ प्रथमो भागः शुभः १ द्वितीयः पितृनाशकः २ तृतीयो मातृनाशकः ३ चतुर्थो मातुलनाशकः ४ पंचमो वंशनाशकः ५ षष्ठो धननाशको स्ववंशनाशकश्च ६ ॥ तत्र द्वितीयतृती-

ययोः प्रसवश्चेत् तत्रादौ गोमुखप्रसवो नान्यत्र ॥ संकल्पः ॥ देशकालसंकीर्तनांते अस्य बालकस्य कृष्णचतुर्दशीजननसूचितारिष्ट-निरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां कृष्णचतुर्दशीजननशांतिं करिष्ये ॥ गणपतिपूजनादिनान्दीश्राद्धांतं ॥ आचार्यप्रमुखऋत्विग्वरणादिभूमिप्रोक्षणांतं ॥ द्विहस्तकुंडे मेखलायोनिपूजनं ॥ पंचभूसंस्कारपूर्वकमग्निप्रतिष्ठापनं ॥ कुंडात्पूर्वतः आग्नेयादिविदिक्षु चतुरः कुंभान् ४ मध्ये शतच्छिद्रं बृहत्कुंभं च १ संस्थाप्य । शतच्छिद्रे १ स्योनापृथिवीति २ परिवाजपतिरिति ३ लोमानिप्रयतिरिति ४ अश्वत्थेवइति ५ धान्यमसिधिनुहीति ६ हिरण्यगर्भइति ७ याओषधीरिति १ पंचमृदः २ पंचरत्नानि ३ पंचत्वचः ४ पंचपल्लवान् ५ पंचधान्यानि ६ सुवर्णं ७ शतौषधानि च, शतौषध्यभावे शतावरीं च, तत्तन्मंत्रैर्निक्षिप्य । श्वेतवस्त्रैः, श्वेतसुरभिपुष्पमाल्यैश्च वेष्टयित्वा, पूर्णपात्रं निधाय, वरुणं संपूज्य पूर्णपात्रोपरि कर्षपरिमितां तदर्द्धपरिमितां वा सौवर्णीं वृषभारूढां वरदाभयहस्तां रुद्रप्रतिमां अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरावृतं रुद्रं ध्यात्वा ॥ ॐ त्र्यंबकंयजामह इति मंत्रेण रुद्राभिषेकसहितं षोडशोपचारैः संपूजयेत् ॥ ततो बृहत्कुंभस्याग्नेयादिविदिक्षु क्रमेण चतुरः कुंभान् महीद्यौरित्यादिविधिना पूर्णपात्रांतं विधाय ॥ आग्नेयकलशे ॐ इमंमेवरुणमिति १ नैर्ऋते कलशे ॐ तत्वायामीति २ वायव्यकलशे ॐ त्वंनोअग्नइति ३ ऐशानकलशे ॐ सत्वंनोअग्नइति ४ मंत्रेण वरुणमावाह्य ॥ ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥ अनेन मंत्रेण च तत्क्रमेण प्रत्येकमावाह्य संपूज्य ॥ आग्नेयादिकलशेषु क्रमेण आनोभद्रेत्यादिएकैकं सूक्तं जपेत् ॥ आग्नेयकलशे आनोभद्रासूक्तं ॥ आनोदशर्च जागतं वैश्वदेवं गोतमः स्वस्तिनोविराट्स्थाना भद्रंकर्णेभिस्तृचं त्रैष्टुभमिति सर्वानुक्रमणिका ॥ ॐआनोभद्राःक्रतवो० मादितिर्ज्ञनित्वमित्यंतं १० ॥ नैर्ऋते भद्राअग्नेइति सूक्तं ॥ भद्राअग्नेरितिद्वादशर्चस्य सुमित्रोऽग्निः आद्ये द्वे

जगत्यौ अंत्यास्त्रिष्टुभः । नैर्ऋते कलशे जपे विनि० ॥ ॐ भद्राअग्नेर्वध्र्यश्वस्यसंदृशोवामीप्रणीतिःसुरणाउपेतयः ॥ यदींसुमित्राविशो-
अग्रइंधतेघृतेनाहुतोजरते दिविद्युतत् ॥ घृतमग्नेर्वध्र्यश्वस्यवर्द्धनंघृतमन्नंघृतम्वस्यमेदनं ॥ घृतेनाहुतउर्वियाविपप्रथेसूर्यइवरोचते
सर्पिरासुतिः ॥ यत्तेमनुर्यदनीकंसुमित्रःसमीधेअग्नेतदिदंनवीयः ॥ सरेवच्छोचसगिरोजुषस्वसवाजंदर्षिसइहश्रवोधाः ॥ यंत्वापूर्व-
मीळितोवध्र्यश्वःसमीधेअग्नेसइदंजुषस्व ॥ सनःस्तिपाउतभवातनूपादात्रंरक्षस्वयदिदंतेअस्मे ॥ भवाद्युम्नीवाध्र्यश्वोतगोपामात्वाता-
रीदभिमातिर्जनानां ॥ शूरइवधृष्णुश्च्यवनःसुमित्रःप्रनुवोचंवाध्र्यश्वस्यनाम ॥ समज्यापर्वत्याउवसूनिदासावृत्राण्यार्याजिगेथ ॥
शूरइवधृष्णुश्च्यवनोजनानांत्वमग्नेपृतनायूँरभिष्याः ॥ १ ॥ दीर्घतंतुर्बृहदुक्षायमग्निःसहस्रस्तरीःशतनीथऋभ्वा ॥ द्युमान्द्युमत्सुन-
भिर्मृज्यमानःसुमित्रेषुदीदयोदेवयत्सु ॥ त्वेधेनुःसुदुघाजातवेदोसश्चतेवसमनासबर्धुक् ॥ त्वंनृभिर्दक्षिणावद्भिरग्नेसुमित्रेभिरिध्य-
सेदेवयद्भिः ॥ देवाश्चित्तेअमृताजातवेदोमहिमानंवाध्र्यश्वप्रवोचन् ॥ यत्संपृच्छंमानुषीर्विशआयन्त्वंनृभिरजयस्त्वावृधेभिः ॥
पितेवपुत्रमबिभरुपस्थेत्वामग्नेवध्र्यश्वःसपर्यन् ॥ जुषाणोअस्यसमिधंयविष्ठोतपूर्वाअवनोर्व्राधतश्चित् ॥ शश्वदग्निर्वध्र्यश्वस्य
शत्रून्नृभिर्जिगायसुतसोमवद्भिः ॥ समनंचिददहश्चित्रभानोवव्राधंतमभिनद्वृधश्चित् ॥ अयमग्निर्वध्र्यश्वस्यवृत्रहासनकात्प्रेद्धोनम
सोपवाक्यः ॥ सनोअजामीँरुतवाविजामीनभितिष्ठशर्द्धतोवाध्र्यश्व ॥ २ ॥ इति षड्षडृचौ द्वौ वर्गौ ॥ इति द्वादशर्चं भद्रा-
अग्ने इति सूक्तं ॥ ततो वायव्ये षोडशर्चं पौरुषं सूक्तं ॥ सहस्रशीर्षाषोडशर्चमानुष्टुभं त्रिष्टुबंतं पुरुषो जगद्बीजमत्र देवतेति सर्वानु-
क्रमणिका ॥ ॐ सहस्रशीर्षा पुरुषः सह० संति देवाइत्यंतं ॥ १६ ॥ तत ऐशाने कलशे कद्रुद्रायेति नवर्चं सूक्तं ॥ कद्रुद्रायेति नव-

र्चस्य घोरः कण्वो रुद्रो गायत्री अंत्यानुष्टुप् तृतीया मैत्रावरुणी ऐशानकलशे जपे विनि० ॥ ॐ कद्रुद्रायप्रचेतसेमीढुष्टमायत-
व्यंसे ॥ वोचेमशंतमंहृदे ॥ यथानोअदितिश्करत्पश्वेनृभ्योयथागवे ॥ यथातोकायरुद्रियं ॥ यथानोमित्रोवरुणोयथारुद्रश्चि-
केतति ॥ यथाविश्वेसजोषसः ॥ गाथपतिंमेधपतिंरुद्रंजलाषभेषजं ॥ तच्छंयोःसुम्नमीमहे ॥ यःशुक्रइवसूर्योहिरण्यमिवरोचते ॥
श्रेष्ठोदेवानांवसुः ॥ १ ॥ शंनःकरत्यर्वतेसुगंमेषायमेष्ये ॥ नृभ्योनारिभ्योगवे ॥ अस्मेसोमश्रियमधिनिधेहिशतस्यनृणां ॥
महिश्रवस्तुविनृम्णं ॥ मानःसोमपरिबाधोमारातयोजुहुरंत ॥ आनइंदोवाजेभज ॥ यास्तेप्रजाअमृतस्यपरस्मिन्धामन्नृतस्य ॥
मूर्द्धानाभासोमवेनआभूषंतीःसोमवेदः ॥ २ ॥ इतिपंचर्चः प्रथमः । चतुर्ऋक् द्वितीयो वर्गः । इति नवर्चं कद्रुद्रायेति सूक्तं ॥
सूक्तजपांते ॥ ग्रहस्थापनं ॥ रुद्रकलशपूजनं ॥ ततो अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि स्थालीपाकं श्रपयित्वा आज्यभागांतं ॥
ततो द्रव्यत्यागः ॥ ग्रहहोमः ॥ प्रधानहोमः ॥ तत्र द्रव्याणि ॥ अश्वत्थप्लक्षपलाशखदिरसमिधः । आज्यं । चरुः । तिलाः ।
माषाः । सर्षपाश्चेति मयूखशांतिसारौ ॥ संमिश्रतिलमाषसर्षपाश्चैकं द्रव्यमिति शांतिकमलाकरः कौस्तुभः प्रयोगदर्पणश्च ॥
अत्राहुतिसंख्या ॥ प्रतिद्रव्यमष्टोत्तरसहस्रं वा अष्टोत्तरशतं वा अष्टाविंशति वा ॥ हवनमंत्रः ॥ ॐ त्र्यंबकंयजा० मृतात्स्वाहेति ॥
प्रधानहोमांते प्रजापतिं समस्तव्याहृतिभिस्तिलैः पूर्वोक्तसंख्यया ॥ हवनांते । पूजास्विष्टं नवाहुत्यो बलिः ॥ बलिदानांते साचार्या
ऋत्विजो मातापितृशिशून् शतच्छिद्रगतैश्चतुष्कलशोदकै रुद्रकलशोदकेन चाभिषिंचेयुः ॥ यजमानो धौते वाससी परिधाय सपरिवारो
ॐरूपेण वोरूपमिति मंत्रेण कांस्यपात्रस्थाज्ये मुखमवलोक्य तत्पात्रं सदक्षिणमाचार्याय दत्त्वा पूर्णाहुतिं जुहुयात् ॥ श्रेयः संपाद्य

दानं ॥ आचार्यपूजनं ॥ आचार्याय सवत्सगोदानं प्रतिमादानं वस्त्रयुग्मदानं च ॥ कर्मेश्वरार्पणं ॥ विसर्जनं ॥ ब्राह्मणभोजनं ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे कृष्णचतुर्दशीजननशांतिः ॥

अथ सिनीवालीकुहूदर्शजननशांतिनिर्णयः ॥ श्रीः ॥ तत्रादौ तद्भेदनिर्णयस्तच्छांतिव्यवस्था स्वतंत्रतया कुहूनिर्णयश्च वक्ष्यते॥ तत्रादौ तद्भेदाः बह्वृचब्राह्मणे—या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूर्यापर्यस्तमियादभ्युदियादिति साऽमातिथिरिति। चतुर्दशीविद्धाऽमावास्या सिनीवाली। प्रतिपद्विद्धाऽमावास्या कुहूः। सूर्योदयमारभ्य सूर्यास्तांतं विद्यमानाऽमावास्या दर्शः। इति बह्वृचब्राह्मणोक्ता भेदाः। चतुर्दश्या अमायाश्चाष्टौ भागाः। चतुर्दश्याः प्रथमादिसप्तमांतान्यतरभागवर्तमाना अमावास्या सिनीवाली। चतुर्दश्यष्टमांशप्रभृत्यमासप्तमांतभागविद्यमाना अमावास्या कुहूः। अमाया अष्टमो भागो दर्शः। तथाह व्यासः—दृष्टचंद्रा सिनीवाली नष्टचंद्रा कुहूः स्मृतेति। सिनीवाली चंद्रवती नष्टचंद्रा कुहूर्मतेति कश्यपश्च। कोशकारोऽपि। अमावास्या त्वमावस्या दर्शः सूर्येंदुसंगमः ॥ सा दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूरिति। दृष्टेंदुत्वं नष्टेंदुत्वं च चंद्रमसः अत्यंतक्षयोदयवशात्। तौ च परमक्षयोदयौ कर्मप्रदीपे कात्यायनेनाभिहितौ। चतुर्दश्यष्टमेंऽशे तु क्षीणो भवति चंद्रमाः ॥ अमावास्याष्टमेंऽशे तु पुनः किल भवेदणुरिति। इदं मतं तु कल्पकृत्कात्यायनस्य स्मृतिकाराणां च। अथात्र शांतिव्यवस्था चासौ ॥ सिनीवाल्यां सिनीवालीपदमुच्चार्यानुष्ठीयमाना उत्तरगार्ग्योक्ता सिनीवालीशांतिः। कुह्वां कुहूपदमुच्चार्यानुष्ठीयमाना उत्तरगार्ग्योक्तैव सिनीवालीसमानविधिकल्पा कुहूशांतिः। वसिष्ठेन तु नष्टेंदावंधतां व्रजेदितिनष्टेंदौ कुह्वां फलदौष्ट्यमुक्त्वा तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूरचेतसामिति ग्रहशांतिरेवोक्ता। अतः सैवकुहूशांतिः। न तदितरा। अमाया अष्टमेंऽशे नारदोक्ता दर्शशांतिः। इति शांतिव्यवस्था ॥ पीयूषधारायां अन्यथा भेदेनापि कुहूदर्शावुक्तौ।

वसिष्ठः—नक्षत्रे यस्य दर्शांतो विषनाड्यां भवेद्यदि ॥ कुहूयोग इति ख्यातो व्याधिमृत्युभयादिकृदिति । अस्यार्थः । यस्मिंन्नक्षत्रे या विषनाड्य उक्ताः तस्मिन् काले यदि दर्शस्य समाप्तिः दर्शचरमनाडी भवेत् तन्नक्षत्रं यस्य पुरुषस्य जन्मर्क्षं जन्मकाले कालांतरे वा स्यात् तस्य पुंसः व्याधिमृत्युभयकृत् कुहूयोगो ध्येयः । तत्र कुहूजननफलं तच्छांतिश्च स्यात् । कालांतरेऽपि कुहूयोगसंभवे शांतिर्विधेया । अतो विषघटिकातः पूर्वकालो दर्शशब्दवाच्य इति । तत्र यस्याः कस्याश्चिदमावास्याया अष्टौ भागान् कृत्वा प्रथमविभागे चंद्रदर्शनमस्ति न वेति विचार्यं ॥ यदा चंद्रदर्शनं तदा सिनीवाली ॥ यदा चंद्रादर्शनं तदा दर्शः ॥ यदा सकलचंद्रक्षयस्तदा कुहूरित्यर्थः ॥ तदुक्तं छंदोगपरिशिष्टे ॥ इंदुक्षयकालः श्राद्धकाल इति प्रकृत्येन्दुक्षयकालपरिमाणमुक्तं ॥ अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चंद्रमाः ॥ अमावास्याष्टमे भागे पुनः किल भवेदणुरिति ॥ आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत् ॥ विशेषमाभ्यां ब्रुवते चंद्रचारविदो जनाः ॥७॥ सि० वा० कु० द० नि० अत्रेंदुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः ॥ तदंत एव क्षयमेति कृत्स्न एवं ज्योतिश्चक्रविदो वदंतीति। आभ्यामिति ल्यब्लोपे पंचमी ॥ एते अमावास्ये प्रकृत्यर्थः । एतत्कारिकात्रयव्याख्यानं तद्भाष्यकारेण कृतं ॥ प्रहरनवात्मकश्चंद्रक्षयकाल इति तत्रामायाः सप्तमाष्टमप्रहरौ कृत्स्नक्षयकालः चतुर्दशीशेषयामदर्शादियामौ च चंद्रसूक्ष्मताकाल इति ॥ पुनःकिलशब्दाभ्यामयमर्थो द्योत्यते चतुर्दश्याः क्षैण्यं सूक्ष्मं । अमांत्ययामे कृत्स्नक्षयकाल इति। अमावास्याविशेषे ज्येष्ठादौ अमाद्ययामे चंद्रो दृश्यत इत्यर्थः ॥ ज्योतिश्चक्रविद इत्यस्यार्थः पितृचरणैरभिहितः ॥ देशकालगणनाकुशला यथा यथा गणयंति तदेवांगीकार्यमिति सूच्यते ॥ ततश्च ज्येष्ठादिकालभिन्नकालेऽप्येवंविधोपलंभः ॥ ज्येष्ठादौ च नोपलंभो देशकालभेदेन संभवतीति ॥ ३ ॥ तदयमत्र विषयविवेकः ॥ यस्याममावास्यायां प्रथमप्रहरे शास्त्रात्प्रत्यक्षतो वा चंद्रदर्शनं स्यात्सा सिनीवाली सर्ववादिसिद्धा ॥ तत्रोत्प-

न्नस्य सिनीवालीजननफलमादेश्यं ॥ सिनीवालीप्रयुक्ता शांतिश्च विधेया ॥ अथ यस्याममावास्यायां यदा नष्टेंदुकलात्वं स्यात्तदा कुहूरिति ॥ तत्रैकस्याश्चंद्रकलायाः किंचिन्नाशो वाऽखिलनाशो वेति संदेहे विनिगमनाविरहात्कृत्स्नकलाक्षय एव विवक्षितो मुख्यत्वात् ॥ यत्किंचिन्नाशस्त्वपचीयमानत्वाद्गौणः । गौणमुख्ययोर्मुख्ये कार्ये संप्रत्यय इतिन्यायात् मुख्यस्यैव ग्रहणं युक्तं । स च कृत्स्नक्षयकालोऽमावास्यांतिमक्षण एव ॥ तस्य च संक्रांतिसमयवदतिसूक्ष्मत्वेन दुर्ज्ञेयत्वादमावास्यायाः सप्तमाष्टमप्रहरयोः कृत्स्नक्षयकालस्य भाष्यकारेण परिभाषितत्वात्सप्तमाष्टमप्रहरात्मकः कालः कुहूशब्दवाच्यः ॥ तत्रोत्पन्नस्य कुहूशांतिः ॥ पुनस्तस्यामेवामावास्यायां प्रथमप्रहरादनंतरं सप्तमप्रहरादर्वाक् प्रहरपंचकात्मकः कालो दर्शशब्दवाच्य इति तत्रोत्पन्नस्य दर्शशांतिर्विधेयेति ॥ एवमेकस्यामेवामावास्यायां कालभेदेन पक्षत्रयं संभवति ॥ यदा त्वमावास्यायां चंद्रदर्शनाभावस्तदा द्वयमेव दर्शत्वकुहूत्वरूपं संभवतीति ॥ अत्र केचिच्चतुर्दशीशेषे चंद्रदर्शने सति परदिने याऽमावास्या सा सिनीवालीत्याहुः । तन्न । दृष्टश्चंद्रो यस्यामिति अन्यपदार्थस्य अमावास्यारूपस्यैव सामानाधिकरण्येन ग्रहणात् ॥ किंच । सिनीशब्देन श्वेता चंद्रकला । वर्णवाचिनः श्वेतशब्दात् 'वर्णादनुदात्तात्तोपधात्तोन' इति ङीप् नकारौ ॥ सिनी तां वलते प्राप्नोतीति सिनीवालीति व्युत्पत्तेश्चतुर्दश्युदितचंद्राश्रया या सामावास्या न युज्यते इति च ॥ तस्माद्दृष्टेंदुः सिनीवालीत्यमावास्यैवाभिधीयत इत्येव ज्यायः ॥ अथ गोलगणितविदोऽन्यथा समादधुः ॥ तत्र सा दृष्टेंदुः सिनीवालीत्यादौ उदयास्ताधिकारोक्तरीत्या दृक्कर्मद्वयसंस्कृतस्य दर्शनयोग्यत्वे सति पूर्वक्षितिजक्रांतिवृत्तासंबंधवत्त्वं ग्रहादेर्दर्शनशब्दवाच्यं ॥ मेघाद्यावरणे तु शास्त्रीयदर्शने दृशिर्वर्तते । 'आत्मा द्रष्टव्य' इत्यादिवत् ॥ तथैव दर्शनायोग्यत्वे सति प्राक्क्षितिजसंबंधवत्त्वं अदर्शनशब्दवाच्यमित्यदर्शनलक्ष्यम् ॥ अतश्चंद्रदर्शनलक्षणवत्यमावास्या सिनीवालीनाम ॥ चंद्रादर्शनवत्यमावास्या कुहूर्नाम ॥ लक्षणद्वयानाक्रांतामा-

वास्या दर्शशब्दवाच्या इति ॥ अयमाशयः ॥ यदाऽमावास्या सूर्योदयात्प्राग्घटिकात्रयवती तदा
मागतं चेत्तदा सा संपूर्णाऽमावास्या सिनीवालीनाम ॥ चंद्रादर्शनवत्यमावास्या कुहूर्नाम ॥ तादृश्याममावास्यायां द्वितीयसूर्योदयावधि-
कायां उत्पन्नस्यारिष्टशांतये सिनीवालीशांतिस्तत्फलं चादेश्यं ॥ अतिवृद्धौ वा तस्यां अमावास्यायां द्वितीयसूर्योदयादनंतरमवशिष्टा-
मावास्याघटीषूत्पन्नस्य कुहूशांतिरेव ॥ चंद्रादर्शनलक्षणसत्त्वात् ॥ यदि सैवामावास्या सूर्योदयात्प्राक् घटिकात्रयं घटिकाचतुष्टयं वा
प्रतिपत्संबद्धा तदा सिनीवाल्येव ॥ अथ तादृश्यां न्यूनायामधिकायां वाऽमावास्यायां तु दृक्कर्मसंस्कारवशेन चंद्रस्यादृश्यत्वमागतं साऽमा-
वास्या संपूर्णा कुहूर्नाम चंद्रादर्शनलक्षणसत्त्वादेव ॥ तत्रापि कुहूशांतिरादेश्या ॥ यदा तु सूर्योदयादनंतरं कियतीषु द्वित्रासु घटीष्व-
तिक्रांतासु अमावास्याप्रवृत्तितः पूर्वं चतुर्दश्येवावस्थिता तस्यामुषसि दृक्कर्मवशतश्चंद्रो दृष्टो मा वाऽदर्शि तथाप्यमावास्यायां चंद्रदर्श-
नादर्शनलक्षणानाक्रांतत्वात्सा संपूर्णाऽमावास्या दर्शोनाम ॥ तत्र दर्शजननशांतिर्विधेयेति । एवममावास्याभेदेन सिनीवाली कुहूदर्शरूपं
संज्ञात्रयं सावकाशमिति गोलज्ञानां मतं ॥ अथ प्रकारांतरेण ॥ सिनीवाली सर्ववादिसिद्धा सैव ॥ कुहूस्तु पारिभाषिकी ॥ यदाह
वसिष्ठः–नक्षत्रे यस्य दर्शांतो विपनाड्यां भवेद्यदि ॥ कुहूयोग इति ख्यातो व्याधिमृत्युभयादिकृत् ॥ अयमर्थः ॥ यस्मिन्नक्षत्रे
या विपनाड्य उक्तास्तास्मिन् काले यदि दर्शस्य चरमघटिका भवेत् तन्नक्षत्रं च यस्य पुरुषस्य जन्मनक्षत्रं जन्मकाले कालांतरे वा
स्यात्तस्य पुंसो व्याधिमृत्युकृत्कुहूयोगो ध्येयः ॥ तत्र कुहूजननफलं शांतिश्च स्यात् ॥ कालांतरेऽपि कुहूयोगसंभवे शांतिर्विधेया ॥
अतएव जगन्मोहने ॥ यस्य जन्मर्क्षगश्चंद्रो विपनाड्यां कुहूर्भवेत् ॥ अभिचारेण किं तस्य स्वयमेव मरिष्यतीति ॥ अतो विषघटि-

कातः पूर्वकालो दर्शशब्दवाच्य इति ॥ एवं प्रकारत्रयेण सिनीवाली कुहूदर्शानां भेद उपपादितस्तत्र यथासंप्रदायं व्यवस्थेत्यलमति-प्रसंगेन ॥ इति मुहूर्तचिंतामणिटीकायां सिनीवालीकुहूदर्शभेदनिर्णयः ॥

अथ सिनीवालीकुह्वोर्दर्शे चोक्तयोः शांत्योर्व्यवस्थोक्ता छंदोगपरिशिष्टभाष्ये ॥ चतुर्दश्या अंत्य अमायाश्चाष्टाविति नव-प्रहरात्मकश्चंद्रक्षयकालः ॥ चतुर्दश्यष्टमे यामे क्षीणो भवति चंद्रमाः ॥ अमावास्याष्टमे यामे पुनः किल भवेदणुरिति वाक्यात् ॥ अत्रेंदुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः ॥ तदंत एव क्षयमेति कृत्स्नो ज्योतिर्विदश्चर्क्षविदो वदंतीति च वाक्यात् ॥ अत्र चतुर्दश्यांताऽमाद्ययामयोरणुश्चंद्रः शास्त्रस्य चक्षुषोर्वा गोचरो भवति स कालो दृष्टचंद्रत्वात्सिनीवाली ॥ अमांत्योपांत्ययामयोः शास्त्रचक्षुषोरगोचर इति क्षीणश्चंद्रः । ततः स कालः कुहूः ॥ मध्यमाः पंच यामा दर्श इति व्यवस्थया शांतिव्यवस्थेति ॥ परे तु चतुर्दशीमात्रयुक्तेऽहोरात्रे वर्तिन्यमा सिनीवाली ॥ प्रतिपन्मात्रयुता कुहूः ॥ वारत्रयस्पर्शि मध्यमाहोरात्रवर्तिन्यमा दर्शः ॥ तस्मिन् चतुर्दशीप्रतिपदोरभावेनोभयलक्षणानाक्रांतत्वात् ॥ तथाऽवमवतीचामा दर्शः ॥ केवलचतुर्दशी केवलप्रतिपद्युक्तत्वाभावात् ॥ अतस्त्रि-स्पर्शिन्याममवमवत्यां वा सिनीवाली कुहूप्राप्त्यभावात् दर्शशांतिरिति युक्तमाहुः ॥ इति शांतिमयूखे सिनीवालीकुहूदर्शभेदनिर्णयः ॥ शांतिसारेऽप्येवमेव ॥ अथ नष्टेंदावंधतांव्रजेदिति निर्णयसिंधुटीकायां ॥ नष्टेंदाविति चतुर्दशीविद्धा अमा सिनीवाली ॥ प्रतिपद्विद्धा कुहूः ॥ वेधद्वयरहितो दर्शः ॥ पृथक्शांतिनिमित्तप्रविष्टानि ॥ तदुक्तं ॥ खंडामायां सिनीवाली कुहूजननशांतिः ॥ अखंडायां तु दर्शजनन-शांतिरिति ॥ ज्योतिषे तु दृष्टचंद्रा सिनीवाली नष्टचंद्रा कुहूः स्मृता ॥ इतिवाक्ये नष्टचंद्रेत्यस्यादृष्टचंद्रेत्यर्थः ॥ तथाचादर्शनयोग्यचंद्रो-पलक्षिता कुहूः ॥ सूर्योदयोत्तरं प्रतिपद्घटीषु प्रवृत्त्या दर्श इति भेद उक्तः ॥ इति निर्णयसिंधुटीकायांसिनीवालीकुहूदर्शभेदनिर्णयः ॥

चतुर्दशीविद्धामावास्या सिनीवाली । प्रतिपद्विद्धा कुहूः ॥ वेधद्वयरहितो दर्शः ॥ इति संस्कारकौस्तुभे ॥ प्रयोगदर्पणे च ॥ तथा च शांतिसारे बह्वृचब्राह्मणं ॥ यापूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूर्यापर्यस्तमियादभ्युदियादिति साऽमातिथिरिति शांतिसारे ॥ चतुर्दश्या अंत्ययामे अमावास्यायाः प्रथमो यामः सिनीवाली । अमाया अंत्योपांत्ययामौ कुहूः ॥ मध्यवर्तिपंचयामा दर्श इति केचित् ॥ अपरे चतुर्दशीमात्रयुतेऽहोरात्रे वर्तमाना अमावास्या सिनीवाली ॥ प्रतिपन्मात्रयुतेऽहोरात्रे वर्तमाना कुहूः ॥ तेनामाया वासरत्रयस्पर्शित्वलक्षणदिनवृद्ध्यभावे सूर्योदयस्पर्शित्वाभावलक्षणक्षयाभावे च दर्शो नास्त्येव ॥ उदयात्पूर्वाहोरात्रे वर्तमानायाः सिनीवालीत्वात् ॥ उदयोत्तरं वर्तमानायाः कुहूत्वात् ॥ दिनक्षये सर्वाप्यमा दर्शसंज्ञा ॥ न तत्र सिनीवालीकुहूभागौ ॥ केवलचतुर्दशीकेवलप्रतिपद्युक्तत्वाभावात् ॥ एवं दिनवृद्धौ त्रिदिने स्पर्शे मध्यदिनस्था षष्टिनाडीमिताऽमावास्या दर्शसंज्ञा ॥ चतुर्दश्यादियोगाभावात् ॥ पूर्वोत्तरदिनस्थौ भागौ सिनीवालीकुहूसंज्ञावित्याहुः ॥ इदं मयूखे स्पष्टम् ॥ इति धर्मसिंधौ सिनीवालीकुहूदर्शभेदनिर्णयः ॥ सिनीवालीकुह्वोर्दर्शशांत्या समुच्चयः अव्यभिचारादिति केचित् ॥ तत्त्वंतु सिनीवाल्यामेव सिनीवालीशांतिः ॥ कुह्वां तु दोषमात्रमुक्तम् ॥ दर्शः सूर्येंदुसंगम इति कुह्वा एव दर्शत्वात् तत्र दर्शशांतिरेवेति ॥ केचित्तु दर्शेऽव्यतिपाते पथिकृद्वैश्वानरीवत् कुह्वा द्वयोः समुच्चयमाहुः ॥ द्वयोः सिनीवालीकुहूदर्शशांत्योः ॥ नात्र गोमुखप्रसवः ॥ इति शांतिकमलाकरे प्रयोगदर्पणे च सिनीवालीकुहूदर्शशांतिनिर्णयः ॥

अथ सिनीवालीकुहूशांतिः ॥ श्रीः ॥ उत्तरगार्ग्यः-सिनीवाल्यां प्रसूतास्याद्यस्य भार्यापशुस्तथा ॥ साद्दासीभार्या इति वा पाठः । गजाश्वमहिषीचैव शक्रस्यापि श्रियं हरेत् ॥ गजाश्व महिषी गजिनी अश्विनी च ॥ ये च संति द्विजाश्चान्ये स्वग्रासादोपजीविनः ॥ वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥ द्विजाः पक्षिणः ॥ सिनीवालीकुहूत्पन्नानिति शेषः ॥ कुहूप्रसूतिरत्यर्थं सर्व-

दोषकरी नृणां ॥ यस्य प्रसूतिरेतेषां तस्यायुर्धननाशनम् ॥ कुड्यामपि पशुपक्ष्यादिप्रसवो निषिद्धः ॥ सर्वगंडसमस्तत्र दोषस्तु प्रबलो भवेत् ॥ शांतिं विना विशेषेण परित्यागो विधीयते ॥ परित्यागात्तत्र शांतिं कुर्याद्धीमान्विचक्षणः ॥ परित्यागादिति ल्यब्लोपे पंचमी ॥ परित्यागं कृत्वेत्यर्थः ॥ तेन शांतौ कृतायामपि त्यागः कार्य एव ॥ शांतिं विना तु सुतरां त्याग एवेति तात्पर्यं ॥ स च त्यागो गोमहिष्यादीनां नतु नारीणां बालानां चाशक्यत्वात् ॥ तत्फलं तत्क्षणार्द्धेन पुनरेव विधीयते ॥ न त्यजेत्पंडितो मोहादर्थादज्ञानतोऽपि वा ॥ शांतिं विना यदि बालं न त्यजेदित्यर्थः ॥ तद्योगान्नाशयेत्किंचित् स्वयं वा नाशमश्नुते ॥ तद्योगाद्बाल-योगादित्यर्थः ॥ कल्पोक्तशांतिः कर्तव्या शीघ्रं दोषापनुत्तये ॥ कल्पोक्तशांतिः । कल्पः आथर्वणिकः शांतिकल्पः । तत्रोक्ता या कृष्णचतुर्दशीजननशांतिः । तच्छांतिविधिवत् इयं शांतिरित्यर्थः । रुद्रः शक्रश्च पितरः पूज्याः स्युर्देवताः क्रमात् ॥ कर्षमात्रसुव-र्णेन तदर्द्धार्धेन वा पुनः ॥ अथवा शक्तितः कुर्याद्वित्तशाठ्यविवर्जितः ॥ प्रतिमां कारयेच्छंभोश्चतुर्भुजसमन्विताम् ॥ त्रिशूलखड्गवरदा-भयहस्तां यथाक्रमात् ॥ श्वेतवर्णां श्वेतपुष्पां श्वेतांबरवृषस्थितां ॥ श्वेतांबरा चासौ वृषस्थिता चेति विशेषणोभयपदः कर्मधारयः ॥ त्र्यंब-केन मंत्रेण पूजां कुर्याद्यथाविधि ॥ इंद्रश्चतुर्भुजो वज्रांकुशचापससायकः ॥ वज्रांकुशचापैः सहितः सायको यस्येति बहुव्रीहिः ॥ रक्तवर्णो गजारूढो यतइंद्रेति मंत्रतः ॥ पितरः कृष्णवर्णाश्च चतुर्हस्ताविमानगाः ॥ यष्ट्यक्षसूत्रकमंडलवभयस्यैव धारिणः ॥ गदाक्षसूत्रेति वा पाठः ॥ येचेह इतिमंत्रेण पूजां कुर्यादनंतरम् ॥ मदनरत्नेतु येसत्या इति मंत्रेणेति पाठः ॥ येसत्यासोहविरद इति मंत्रो ऋग्वेदे प्रसिद्धः ॥ इंद्रः पितरश्चाधिप्रत्याधिदेवते ॥ आग्नेयीं दिशमारभ्य कुंभान् कोणेषु विन्यसेत् ॥ तन्मध्ये स्थापयेत् कुंभं शतच्छिद्रसमन्वितम् ॥ तेष्वेव पंचगव्यादींस्तत्तन्मंत्रैश्च निक्षिपेत् ॥ तेष्वेव चतुर्षु कलशेष्वेव ॥ आदिशब्देन पंचमूलपंचरत्नादीनि चतुर्दशीशांत्युक्तानि ॥ कल्पोक्तशांतिः

तत्क्रमेण प्रत्येकमावाह्य संपूज्य ॥ आग्नेयकलशे आनोभद्राइति दशर्चं सूक्तं १० नैर्ऋते कलशे भद्राअग्नेरिति द्वादशर्चं सूक्तं १२ वायव्यकलशे षोडशर्चं पुरुषसूक्तं १६ ऐशाने कलशे कद्रुद्रायेति नवर्चं सूक्तं ९ पठेत् ॥ सूक्तपाठश्चतुर्दशीशांतौ द्रष्टव्यः ॥ सूक्तजपांते ग्रहस्थापनं रुद्रकलशस्थापनं ॥ तत ऋत्विजः संपूज्य गोदानादिदक्षिणादानं ॥ गवामंगेष्विति गोदानं ॥ १ ॥ शरण्यं सर्वलोकानां लज्जाया रक्षणं परं ॥ सुवेषधारिवस्त्र त्वमतः शांतिं प्रयच्छ मे ॥ इति वस्त्रं ॥ २ ॥ हिरण्यगर्भगर्भस्थमिति सुवर्णं ॥ ३ ॥ सर्वभूताश्रया भूमिर्वराहेण समुद्धृता ॥ अनंतसस्यफलदा अतः शांतिं प्रयच्छ मे ॥ इति भूमिं ॥ ४ ॥ ततो दशदानानि ॥ गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ॥ रौप्यं लवणमित्याहुर्दशदानानि पंडिताः ॥ उक्तमंत्राभ्यां पुनर्गोदानं भूमिदानं च ॥२॥ महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः ॥ तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥ इति तिलान् ॥ ३ ॥ उक्तमंत्रेण पुनर्हिरण्यदानं ॥ ४ ॥ कामधेनुषु संभूतं सर्वक्रतुषु संस्थितं ॥ देवानामाज्यमाहारमतः शांतिं प्रयच्छ मे ॥ इत्याज्यदानं ॥ ५ ॥ उक्तमंत्रेण वस्त्रदानं पुनः ॥ ६ ॥ सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् ॥ प्राणिनां जीवनोपायमतः शांतिं प्रयच्छ मे ॥ इति धान्यं ॥ ७ ॥ यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः ॥ सामवेदस्तु वेदानां महादेवस्तु योगिनां ॥ प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा ॥ तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥ मम तस्मात्परां शांतिं ददस्व गुड सर्वदा ॥ इति गुडदानं ॥ ८ ॥ प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा ॥ शिवनेत्रोद्भवं रूप्यमतः शांतिं प्रयच्छ मे ॥ इति रौप्यं ॥ ९ ॥ यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ॥ शंभोः प्रीतिकरं नित्यमतः शांतिं प्रयच्छ मे ॥ इति लवणं ॥ १० ॥ इति दश दानानि ॥ क्षीरजातास्तथा शंखाः क्षीरादमृतसंभवः ॥ क्षीरात् क्षीरोदवत्कीर्तिः क्षीरे प्राणस्य संभवः ॥ तस्मात् क्षीरप्रदानेन अतः शांतिं प्रयच्छ मे ॥ इति क्षीरदानं ॥ १ ॥ उक्तमंत्राभ्यां पुनराज्यदानं ॥ २ ॥ गुड-

दानं च ॥ ३ ॥ एवं सप्तदश दानानि दत्त्वा ॥ आज्यपूर्णे कांस्यपात्रे ॐ रूपेण वो रूपमिति सकुटुंबः प्रतिरूपं वीक्ष्य दद्यात् ॥ तत्र मंत्रः ॥ आज्यं तेजः समुद्दिष्टं आज्यं पापहरं स्मृतं ॥ आज्यं सुराणामाहार आज्ये देवाः प्रतिष्ठिता इति ॥ ॥ अथैतेषां मानानि ॥ भुवो मानं गोचर्म । गोचर्ममानं तु सप्तहस्तेन दंडेन त्रिंशद्दंडान्निवर्तनं ॥ दश तान्येव निवर्तनानि गोचर्मेति ॥ तिलानां द्रोणः । द्रोणः पायली ॥ सुवर्णरजतयोः दशमाषतदर्धतदर्धान्यतमं ॥ आज्यस्य चत्वारिंशत्पलानि । ४० पलानि १६० तोळे ॥ वाससांत्रिहस्तत्वं ॥ धान्यस्य पंच द्रोणाः ॥ एवं गुडलवणयोः ॥ एतावत्प्रमाणाशक्तौ नित्ये नैमित्तिके यथाशक्ति देयानि ॥ हिरण्यगर्भेति मंत्रेण तत्तत्प्रतिनिधित्वेन यथाशक्ति हिरण्यं वा देयं ॥ नैमित्तिकादेरकरणे प्रत्यवायात् ॥ ॥ ततो दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि चरुं श्रपयित्वा आज्यभागांते द्रव्यत्यागः ॥ ग्रहहोमः ॥ प्रधानहोमः ॥ तत्र द्रव्याणि ॥ अश्वत्थप्लक्षपलाशखदिरसमिधः ४ आज्यं ५ चरुः ६ मिश्रितसर्षपतिलमाषाः ७ ॥ आहुतिसंख्या ॥ रुद्रस्याष्टोत्तरशतं १०८ अधिप्रत्यधिदेवतयोः प्रत्येकं अष्टाविंशत्यष्टौ वा २८।८ ॥ पुनस्त्र्यंबकमंत्रेण शक्तितस्तिलहोमोऽधिकः ॥ १०८।२८।८। वा ॥ प्रजापतिं समस्तव्याहृतिभिस्तिलैरष्टाविंशत्यष्टौ वा २८।८॥ हवनमंत्राः ॥ ॐ त्र्यंबकंयजा० १ ॐ त्रातारमिंद्रं० २ ॐ येचेहपितरो० ३ ॐ त्र्यंबकंय० ४ ॐ भूर्भुवःस्वः ५ ॥ होमांते ॥ पूजा स्विष्टं० श्रेयःसंपाद्य दानांते ॥ अभिषेकः ॥ रुद्रकलशोदकसहितेन शतच्छिद्रगतैश्चतुष्कलशोदकैर्मातापितृशिशूनामभिषेकः ॥ ॐइमम्मे० ॐतत्त्वायामि० ॐत्वन्नोअग्ने० ॐसत्वन्नोअग्ने० इतिचतुर्भिर्वारुणमंत्रैः कार्यः ॥ विसर्जनं ॥ पृथग्रुद्राभिषेकः ॥ सकलं पुनः स्वस्तिपुण्याहवाचनं ॥ कर्मसंपूर्णतावाचनं वा ॥ ब्राह्मणतर्पणं ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे उत्तरगार्ग्योक्तः सिनीवालीकुहूशांतिप्रयोगः ॥

## अथ दर्शशांतिः ॥ श्रीः ॥ नारदः ॥ अथातो दर्शजातानां मातापित्रोर्दरिद्रता ॥ तद्दोषपरिहारार्थं शांतिं वक्ष्यामि ते सदा ॥

पुण्याहं वाचयित्वादौ क्रतुसंकल्पपूर्वकं ॥ कुंडं वा मंडलं कुर्यात्तद्देशे स्थापयेद्घटं ॥ कुंडं वेति ॥ कुंडं वा स्थंडिलं वा ॥ मंडलं सर्वतो-
भद्रमंडलं ॥ तद्देशे तत्समीपे ॥ तत्कुंभे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकं ॥ आदिशब्दाद्गोमूत्रगोमये ॥ न्यग्रोधोदुंबराश्वत्था प्रचूता-
निंबकास्तथा ॥ एतेषां वृक्षमूलानां त्वगादीन्पल्लवांस्तथा ॥ पंचरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत् ॥ सर्वे समु० क्षयकारकाः ॥
आपोहिष्ठेति तिसृभिः कयानश्चित्र इत्यृचा ॥ यत्किंचेदमृचा चैव समुद्रज्येष्ठ इत्यृचा ॥ अभिमंत्र्योदकं पश्चादग्नेः पूर्वप्रदेशके ॥
मंडलं कुर्यादिति यदुक्तं तदाह ॥ हारिद्रं रक्तकं चैव कृष्णं श्वेतं च नीलकं ॥ एतेषां तंडुलैश्चैव सर्वतोभद्रमुद्धरेत् ॥ कुंभतः पश्चाद-
ग्नेश्च पूर्वतः हरिद्रादिरंजितैस्तंडुलैः सर्वतोभद्रमुद्धरेदित्यर्थः ॥ दर्शस्य देवतायाश्च सोमसूर्यस्वरूपकं ॥ प्रतिमां स्वर्णजां नित्यं
राजतीं ताम्रजां तथा ॥ पितृरूपाया दर्शदेवतायाः सोमसूर्ययोश्च स्वरूपं प्रतिमारूपं स्थापयेदिति प्रयोगपारिजातः ॥
दर्शदेवता पितरः । तद्रूपां प्रतिमां स्थापयेदित्यभेदेनान्वयः । कुहूा अपि तत्त्वात्तत्रापीदमिति कौस्तुभः ॥ सर्वतोभद्र-
मध्ये च स्थापयेद्दर्शदेवतां ॥ ग्रहवर्णं वस्त्रयुग्मं तद्वर्णं गंधपुष्पकं ॥ आप्यायस्वेतिमंत्रेण सविता पश्चात्तथैव च ॥ उपचारैः समाराध्य
ततो होमं समाचरेत् ॥ कृत्वा वह्निं प्रतिष्ठाप्य क्रतुसंकल्पमीदृशं ॥ आयुरारोग्यसिध्यर्थं सर्वारिष्टप्रशांतये ॥ पुत्रस्य
दर्शजननदोषनिर्हरणाय च ॥ मातापित्रोः कुमारस्य सर्वारिष्टप्रशांतये ॥ तेषामायुः श्रिये चैव शांतिहोमं करोम्यहं ॥ आयुरारोग्येति
श्लोकद्वयेन क्रतुसंकल्पं कृत्वेत्यर्थः ॥ समिधश्च चरुं द्रव्यं क्रमेण जुहुयाद्गृही ॥ हुनेत्सवितृमंत्रेण सोमोधेनुं च मंत्रतः ॥ एतैर्म-
न्त्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतं ॥ एतैरिति बहुवचनं प्रणवस्वाहाकारसाहित्याभिप्रायेणानुवादः ॥ अतएवाह दर्शस्य देवताहोमस्त्वष्टा-
विंशतिसंख्यया इति कौस्तुभः ॥ दर्शस्य देवताहोमस्त्वष्टाविंशतिसंख्यया ॥ होममेवं तु कृत्वाथ विदध्याच्चाभिषेचनं ॥ श्रीसूक्ता-

युष्यसूक्ताभ्यां समुद्रज्येष्ठ इति क्रमात् ॥ एतैर्मंत्रैरभिषेको मातापित्रोः शिशोस्तथा ॥ ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् ॥ हिरण्यं रजतं चैव कृष्णां धेनुं सदक्षिणां ॥ ब्राह्मणान् भोजयेत्तत्र कारयेत् स्वस्तिवाचनं ॥ इति नारदोक्ता दर्शशांतिः ॥ कुहामपि दर्शशांतिरेव न सिनीवालीशांतिः ॥ "दर्शः सूर्येंदुसंगमः" इत्युक्तेः कुहा एव दर्शत्वादिति शांतिरत्ने कमलाकरः ॥

अथ दर्शशांतिप्रयोगः ॥ श्रीः ॥ न गोमुखप्रसवः ॥ संकल्पः ॥ अस्य बालकस्य दर्शजननसूचितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीतये सग्रहमखां नारदोक्तां दर्शजननशांतिं करिष्ये ॥ गणपतिपूजनादिभूमिपूजनांतं ॥ ततः कुंडात् स्थंडिलाद्वा पूर्वतः सर्वतोभद्रमंडलं विरच्य ॥ मंडलपूर्वस्यां ॥ महीद्यौरित्यादिना कलशं संस्थाप्य गंधप्रक्षेपांते दधिक्षीरघृतगोमूत्रगोमयानि न्यग्रोधोदुंबराश्वत्थाम्रनिंबवृक्षाणां मूलानि त्वचः पल्लवांश्च पंचरत्नानि तत्तन्मंत्रैर्निक्षिप्य ॥ वस्त्रयुग्मेनावेष्ट्य ॥ तदुदकं ॐसर्वेसमुद्राः० क्षयकारकाः॥१॥ ॐआपोहिष्ठेतितिस्रः ३ ॥ ॐ कयानश्चित्रइत्येका १ ॐ यत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्याश्चरामसि ॥ अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः ॥ १ ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवंतु ॥ २ ॥ इतिद्वे ॥ इत्यभिमंत्र्य ॥ पूर्णपात्रं निधाय वरुणं पूजयेत् ॥ अग्निस्थापनं ॥ सर्वतोभद्रस्थापनं ॥ तन्मध्ये कलशस्थापनं ॥ ॐ येचेहपितरइतिसुवर्णप्रतिमायां पितॄन् ॥ तद्दक्षिणे ॥ ॐ आप्यायस्वेति रजतप्रतिमायां सोमं ॥ तद्वामतः ॥ ॐ आकृष्णेनेतिताम्रप्रतिमायां सूर्यं । अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं संपूजयेत् ॥ सोमसूर्याभ्यां तत्तद्वर्णवस्त्रयुग्मचंदनपुष्पाणि समर्पयेत् ॥ ग्रहस्थापनं ॥ रुद्रकलशस्थापनं ॥ दक्षिणतो ब्रह्मासनास्तरणादि चरुं श्रपयित्वा आज्यभागांतं ॥ ततो होमसंकल्पः ॥ तत्र मंत्रौ ॥ आयुरारोग्यसिध्द्यर्थं सर्वारिष्टप्रशांतये ॥ पुत्रस्य दर्शजननदोषनिर्हरणाय च ॥ १ ॥

मातापित्रोः कुमारस्य सर्वारिष्टप्रशांतये ॥ तेषामायुः श्रिये चैव शांतिहोमं करोम्यहं ॥ २ ॥ द्रव्यत्यागः ॥ ग्रहहोमः ॥ प्रधान-होमः ॥ होमद्रव्यं ॥ यज्ञियसमिधः १ चरुः २ ॥ पितॄणामष्टाविंशतिसंख्या २८ । सोमसूर्ययोः प्रत्येकमष्टोत्तरशतसंख्या १०८ ॥ होममंत्राः ॥ ॐ सेचेहपितरो०१ ॐ सोमोधेनुं०२ ॐआकृष्णेन०३ समस्तव्याहृतिहोमः २८ तिलैः ॥ सर्वतोभद्रमंडलदेवताहोमः ॥ हवनांते मातापितृशिशूनां पूर्वस्थापितकलशोदकेनाभिषेकः॥ तत्र मंत्राः ॥ हिरण्यसूक्तं पंचदशर्चं ॥ आयुष्यसूक्तं ॐदिवस्परीत्यनु-वाक एकदशर्चः ॥ ११ ॥ अथवा ॐअग्निरायुष्मानित्यष्टर्चं सौत्रं ॥ ८ ॥ ॐ समुद्रज्येष्ठाः १ इति ॥ कांस्यपात्रे आज्यावलोकनं ॥ तद्दानं च ॥ पूजास्विष्टं० विसर्जनं ॥ हिरण्यरजतसवत्सकृष्णधेनुदानानि ॥ ब्राह्मणभोजनं ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे नारदोक्तदर्शजननशांतिप्रयोगः ॥

अथ पौर्णमासीकृष्णाष्टमीपर्वणोर्जननशांतिः ॥ श्रीः ॥ वसिष्ठः । पर्वण्यपि प्रसूतौ च सर्वारिष्टभयप्रदः ॥ तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूरचेतसामिति ॥ पर्वणि पौर्णिमायां कृष्णाष्टम्यां च । पर्वशब्दस्तिथिविशेषवाचकः । तिथिभेदे क्षणे पर्व इति नानार्थकोशात् । तथाच ज्योतिषे । सुखबोधे । चतुर्दश्यष्टमी कृष्णा अमावास्या च पौर्णिमा । पुण्यानि पंच पर्वाणि सूर्यसंक्रांति-वासर इति तत्र कृष्णचतुर्दश्यमावास्या सूर्यसंक्रमणजननशांतिकानां दोषतारम्येन पृथग्पृथग्विधानात् पर्वशब्देनात्र पौर्णमासी कृष्णा-ष्टम्योर्ग्रहणं पर्यवस्यते । व्रात्यस्तोमसाद्यस्क्रादिवत्पर्वनामसामान्याच्चामावास्याशांतेः साधारणधर्माणां सर्वतोभद्रमंडलसूक्तकलशाभि-मंत्रणप्रधानदेवतादक्षिणोत्तरयोस्तदधिप्रत्यधिदेवतापूजनश्रीसूक्ताद्यभिषेकानामतिदेशः । ॥ अथप्रयोगः ॥ न गोमुखप्रसवः । ममास्याशिशोः पौर्णमासी(कृष्णाष्टमी)पर्वजननसूचितसर्वारिष्टादिभयनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां पौर्णमासी (कृष्णाष्टमी)

पर्वजननशांतिं करिष्ये । इतिसंकल्प्य । गणपतिपूजनाद्यग्निप्रतिष्ठापनांतं । अग्नेःपूर्वतः सर्वतोभद्रमंडलं विरच्य मंडलपूर्वतः महीद्यौरित्यादिना कलशं स्थापयेत् । गंधप्रक्षेपांते । दधिक्षीरघृतगोमूत्रगोमयानि । न्यग्रोधोदुंबराश्वत्थाम्रनिंबवृक्षाणां मूलानि त्वचः पल्लवांश्च पंचरत्नानि तत्तन्मंत्रैः प्रक्षिप्य । वस्त्रयुग्मेनावेष्ट्य । तदुदकं । ॐसर्वेसमुद्राः स० क्षयकारकाः । ॐ आपोहिष्ठेतितिस्रः ३ ॐ कयानश्चित्रइत्येका ? । ॐ यत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्या३श्चरामसि । अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसो देवरीरिषः ॥ १ ॥ ॐ समुद्रज्येष्ठाः सलिलस्यमध्यात्पुनानायंत्यानिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमा मवंतु ॥ २ ॥ इतिद्वे । इत्यभिमंत्र्य । पूर्णपात्रं निधाय वरुणं पूजयेत् । अग्निस्थापनं । सर्वतोभद्रस्थापनं । तन्मध्ये कलशस्थापनं । पूर्णपात्रे । राजतप्रतिमायां सोमं । तद्दक्षिणतः सुवर्णप्रतिमायां उमां वामतः अपः । अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं प्रतिष्ठाप्य । क्रमेण । ॐ आप्यायस्वस०१ ॐ श्रीश्चतेल०२ ॐ आपोहिष्ठा०३ इतिमंत्रैः ॐ साधिप्रत्यधिदेवाय सोमाय नमः । इति संपूज्य । तदु-त्तरतः । ग्रहस्थापनं रुद्रकलशस्थापनांतं । दक्षिणतो ब्रह्मासनास्तरणादि चरुं श्रपयित्वा । आज्यभागांतं । ततो मंत्रोच्चारणमात्रेण होमसंकल्पः । मंत्रः । आयुरारोग्यसिध्यर्थं सर्वारिष्टप्रशांतये ॥ पुत्रस्य पर्वजननदोषनिर्हरणाय च ॥ मातापित्रोः कुमारस्य सर्वारिष्टप्रशांतये ॥ तेषामायुः श्रिये चैव शांतिहोमं करोम्यहं ॥२॥ द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । होमद्रव्यं । यज्ञियवृक्षसमिधः । चरुः । होमसंख्या । प्रधाने अष्टोत्तरशतं १०८ अधिप्रत्यधिदेवयोरष्टाविंशति ॥ २८ ॥ होममंत्राः पूजोक्ताएव । तिलैः समस्तव्याहृतिभिर्होमः ॥ २८ ॥ सर्वतोभद्रदेवताहोमः । हवनांते मातापितृशिशूनां प्रथमकलशोदकेनाभिषेकः । तत्रमंत्राः । श्रीसूक्तं पंचदशर्चं । आयुष्यसूक्तं । दिवस्परीत्यनुवाको एकादशर्चः । अथवा । अग्निरायुष्मानितिअष्टर्चसौत्रं । ॐ समुद्रज्येष्ठाः० । स्नानं । आज्यावलोकनं तद्दानं च ।

पूजास्विष्टं न० विसर्जनं ॥ हिरण्यरजतसवत्सश्वेतगोदानानि । ब्राह्मणभोजनं ॥ ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे जनन-शांतिकांडे पौर्णिमाकृष्णाष्टमीपर्वजननशांतिः ॥

अथ कातीयपरिशिष्टोक्तमूलशांतिप्रयोगः ॥ तत्रादौ मूलजननफलं ॥ मूलांशे प्रथमे पितुर्नेष्टो द्वितीये मातुः तृतीये धनधान्ययोः चतुर्थे कुलशोकावहः स्वयं पुण्यभागी स्यात् ॥ शिशुरिति शेषः ॥ अत्र पुंस्त्वमविवक्षितं । तेन पुत्रिकाप्रसवेऽपि । तथाच शौनकः ॥ एवं च दुहितुर्ज्ञेयं मूलजातफलं बुधैरिति । फलावधिः । नृसिंहप्रसादे । मूलेचाष्टकवर्षकं फलमित्यध्याहारः । पुत्रदर्शन-वर्जितेति च ॥ शांत्याः कालः ॥ मूलनक्षत्रे मूलविधानं कुर्यात् ॥ प्रसवमूलनक्षत्रात्सप्तविंशतितमे दिने यन्मूलनक्षत्रमायाति तस्मिन् मूलनक्षत्रे मूलविधानं मूलजननशांतिं कुर्यात् ॥ तत्र प्रतिबंधश्चेत् जननाद्द्वादशाहादि । तेषु कर्तव्यं ॥ अथप्रयोगः ॥ तत्रादौ गोमुखप्रसवः ॥ संकल्पः ॥ मम अस्य कुमारस्य कुमार्या वा मूलनक्षत्रप्रथमचरणादिजननसूचितपित्रारिष्टादिसकलारिष्टनिरसन-द्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां मूलजननशांतिं करिष्ये ॥ गणपतिपूजनादि अग्निस्थापनांतं ॥ ईशान्यां । ॐमहीद्यौरित्यादि-विधिना कलशं स्थापयित्वा । तस्मिन् सर्वौषधीः सर्वगंधान् पंचरत्नानि श्वेतसर्षपांश्च प्रक्षिप्य । पूर्णपात्रे वरुणं संपूज्य । वस्त्रेणावेष्ट्य । चंदनपुष्पमालाभिरलंकुर्यात् ॥ सर्वौषध्यश्च । मुरामांसी वचा कुष्टं शैलेयं रजनीद्वयं ॥ शुंठी चंपकमुस्ता च सर्वौषध्यः स्मृता दशेति ॥ सर्वगंधाश्च । अगरुः कुंकुमं चंद्रश्चंदनं च चतुःसमं ॥ सर्वगंधानितिप्राहुः समस्तसुरवल्लभानिति ॥ केचिदस्मिन् कलशे रुद्रपूजनं कुर्वंति ॥ एनं कलशं स्पृष्ट्वा ॐ नमस्त इति सकलं रुद्राध्यायं १ ॐआशुःशिशान इति सप्तदशर्चमप्रतिरथसूक्तं २ ॐकृणुष्वपाजइति पंचर्चं राक्षोघ्नं सूक्तं जपेत् ॥ तदुत्तरतः ॥ ॐमहीद्यौरित्यादिविधिना चतुःप्रस्रवणसंयुक्तं द्वितीयमुदकुंभं निधाय पूर्णपात्रे वरुणं पूज-

येत् ॥ चतुर्दिक्षु चत्वारि प्रस्रवणानि मुखानि यस्य स चतुःप्रस्रवणः ॥ तत्र मध्यकलशे मध्यकलशकार्यं । चतुर्षु प्रस्रवणेषु कलशचतुष्टयकार्याणि इति विवेकः ॥ ततः शतौषधानि हिरण्यमूलं सप्तधान्यानि च वंशपात्रे कृत्वा । तद्वंशपात्रं वस्त्रे बध्वा । पूर्णपात्रोपरि निदध्यात् । शतौषधानि भाष्ये द्रष्टव्यानि ॥ तदलाभे मुहूर्तचिंतामणिटीकायां । शतौषधीनामप्राप्तौ भवेदेका शतावरी ॥ सर्वेषामपिगंधानामलाभे चंदनं स्मृतमिति ॥ तथाऽपरं च भाष्ये ॥ सर्वासामप्यलाभे तु शतमूली प्रशस्यते ॥ यथायथं प्राप्तं वस्तु तत्र विनिक्षिपेदिति ॥ हिरण्यमूलं सुवर्णमूलं अष्टादशमाषं ॥ अष्टादशमाषꣳहिरण्मयमूलमिति हेमाद्रौ शांतिकांडे ॥ सप्तधान्यानि । व्रीहयो यवगोधूमा मुद्गमाषप्रियंगवः ॥ तिलाश्च सप्तमाः प्रोक्ताः सप्तधान्यमुदाहृतमिति ॥ अथवा ॥ यवगोधूमधान्यानि तिलाः कंगुस्तथैव च । श्यामकं चणकं चैव सप्तधान्यमुदाहृतमिति ॥ ॥ ततस्तदुपरि वस्त्रे अष्टदलं कृत्वा तत्कर्णिकायां सौवर्णप्रतिमायां अग्न्युतारणप्राणप्रतिष्ठापूर्वकं ॐअसुन्वंतमिति मंत्रेण निर्ऋतिं देवतां षोडशोपचारैः पूजयेत् ॥ तदीशान्यां ग्रहस्थापनं ॥ रुद्रकलशस्थापनं च ॥ ॥ चतुःप्रस्रवणकलशोदकेन तत्राभिषेकं कुर्यात्पितुः शिशोर्जनन्या देवस्यत्वेति ॥ तत्रावसरे सर्वसुरभ्युन्मृदितानित्यग्निप्रोक्तौ भूतनिर्देशादत्रावसरे पतिपुत्रवतीभिर्वृद्धसुवासिनीभिः पित्रादित्रयाणां सर्वैः सुरभिभिश्चंदनकर्पूरकस्तूरीकेशरादिभिरुद्वर्तनं कार्यं ॥ देवस्यत्वेति मंत्रः शिरो मे श्रीर्यशइत्येतत्सान्निधानात् क्षत्रस्य योनिरित्यध्यायस्थो ग्राह्यः ॥ अग्नेः पश्चिमत औदुंबरीमासंदीमर्थपरिमाणामुदगग्रामास्तृणाति ॥ ॐक्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि ॥ तदुपरि कृष्णाजिनमास्तृणाति ॥ ॐमात्वाहिꣳसीन्मामाहिꣳसीः॥तदुपरिश्वेतवस्त्रं प्रागदशमुदग्दशं वा तूष्णीं स्तृणाति॥ तस्मिन्नास्ते पिता शिशुर्जननी च ॥ ॐ निषसादधृतव्रतोवरुणः

---

१ धान्यानि व्रीहयः ।

प्रस्त्यास्रा ॥ साम्राज्यायसुक्रतुः ॥ पादयो रुक्सा उपास्यति राजतः सव्येमृत्योरिति ॥ सौवर्णं दक्षिणेविद्योदिति ॥ सौवर्णःशिरस्येके ॥ रुक्मः मंडलाकारः एकविंशतिचणकदलवद्धिर्हिष्पिंडः सौवर्णो आभरणविशेषः ॥ तथाच चयनसूत्रं । यजमानः कंठे रुक्मं प्रतिमुंचते परिमंडलमेकविᳪंशतिपिंडं बहिष्पिंडमिति ॥ राजतं सव्यपादाधः ॐ मृत्योःपाहि ॥ सौवर्णं दक्षिणपादाधः शिरसि वा ॥ ॐ विद्योत्पाहि ॥ ॥ अथाचार्यः ॥ सर्वसुरभ्युन्मृदितान् तत्रासीनान् संपातैनैकेनाभिषिंचति शिरसोऽध्यनुलोमं ॥ आसीनानितिद्वितीयया त्रयाणांसंस्कार्यत्वेन प्राधान्यात् प्रतिप्रधानं गुणावृत्तिरिति न्यायेन क्रमेण त्रीनपि संस्कार्यान्प्रतिअभिषेकावृत्तिः प्रत्यभिषेकं मंत्रावृत्तिश्च ॥ ध्रुवा असदन्निति सर्वाण्यालभत इति प्रतिस्रुचमालंभनवत् मंत्रावृत्तिवच्च ॥ संपातेन संततधारया ॥ शिरसोऽध्यनुलोमं ॥ शिरःप्रभृतिपादांतानि सर्वाण्यंगानि प्रतिदिशः सर्वत्रसावित्रमश्विनोः सरस्वत्याइंद्रस्येतिप्रतिमंत्रं । प्रतिदिशमवस्थितः सन्नभिषिंचेदित्यर्थः । सर्वाभिश्चतुर्थं । सर्वाभिः अश्विनोः सरस्वत्या इंद्रस्येति तिसृभिः समुच्चिताभिश्चतुर्थमभिषिंचेत् । अत्रापि सावित्रो मंत्रः । चतुर्थे अभिषेके पक्षांतरं । महाव्याहृतिभिरेके । उत्तमेन वा । उत्तमेन इंद्रियस्येंद्रियेणेति चतुर्थेन मंत्रेण वा । अत्रापि सावित्रो मंत्रः ॥ पूर्वदिक्स्थः ॥ पूर्वदिक्प्रस्रवणोदकधारया ॥ ॐ देवस्यत्वास० हस्ताभ्यां ॥ अश्विनोर्भैषज्येन तेजसेब्रह्मवर्चसायाभिषिंचामि । पश्चिमदिक्स्थः पश्चिमप्रस्रवणोदकधारया ॥ ॐ देवस्यत्वा० स्ताभ्यां ॥ सरस्वत्यैभैषज्येन वीर्यायान्नाद्यायाभिषिंचामि ॥ दक्षिणदिक्स्थो दक्षिणप्रस्रवणोदकधारया ॥ ॐ देवस्यत्वास० भ्यां ॥ इंद्रस्येंद्रियेणबलायश्रियैयशसेऽभिषिंचामि ॥ उदक्दिक्स्थ उदक्प्रस्रवणोदकधारया ॥ ॐ देवस्यत्वास० भ्यां ॥ अश्विनोर्भैषज्येनते० श्रियैयशसेऽभिषिंचामि ॥ पतिपुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनंकार्यं ॥ सपत्नीकस्य यजमानस्य स्नानं ॥ आचमनं ॥ कपाले मांगल्यतिलकधारणं ॥ ॥ अथांगानामालंभनं ॥

शिरोमेश्रीर्यश इति यथालिंगमंगानि सम्मृशति स्नात्वा । यजमान इत्यध्याहारः । स्नात्वा यथालिंगमंगानि सम्मृशतीत्यन्वयः ॥ स्नानांते शिरोमेश्रीर्यशइत्यादिभिर्मंत्रैरंगान्यालभते यथालिंगमिति आश्लेषाजननशांतिविधानसूत्रैकवाक्यत्वात् मे इति मंत्रगतोऽनुषंगः सर्वत्र । तेनसह संधिश्च । तथा अस्तु स्तां संतु इति यथायथमध्याहारः सर्वत्र । तस्य च लौकिकत्वात् मंत्रेणसह संध्यभावः ॥ ॐ शिरोमेश्रीः । अस्तु । इति शिरआलभते ॥ ॐ यशोमेमुखं । अस्तु । इति मुखं ॥ ॐ त्विषिर्मेकेशाश्चश्मश्रूणि संतु । इति शिरस्थ-केशाः श्मश्रूणि मुखजरोमाणि ॥ ॐ राजामे प्राणोऽमृतं । अस्तु । इति नासिकां ॥ ॐ सम्म्राण्मे चक्षुः । अस्तु । इति चक्षुषीयुगपत् ॥ ॐ विराण्मेश्रोत्रं । अस्तु । इति श्रोत्रे । भेदेमंत्रावृत्तिः ॥ ॐ जिह्वामेभद्रं । अस्तु । इतिजिह्वां ॥ ॐ वाङ्मेमहः । अस्तु । इतिमुखं ॥ ॐमनोमेमन्युः । अस्तु । इति हृदयं ॥ उदको० ॥ ॐ स्वराण्मेभामः । अस्तु । इति भ्रूमध्यं ॥ ॐ मोदामेअंगुलीः । संतु । इति दक्षिणवामकरपादांगुलीश्च ॥ भेदेमंत्रा० ॥ ॐ प्रमोदामेअंगानि संतु इति शिरःप्रभृतिपादांतान्यंगानि ॥ ॐमित्रम्मेसहः । अस्तु-इति शिरःप्रभृतिपादांतांगगतंबलं ॥ बाहूमेबलमिंद्रियं स्तां इतिदक्षिणवामबाहू ॥ भेदेमंत्रावृत्तिः ॥ ॐहस्तौमेकर्म्मवीर्यं । स्तां इति हस्तौ युगपत् ॥ ॐ आत्मामेक्षत्रं । अस्तु इति हृदयं ॥ उदको० ॥ ॐ उरोमेक्षत्रं । अस्तु इति उरः ॥ ॐ पृष्ठीर्म्मेराष्ट्रं । अस्तु इति पृष्ठदेशं ॥ ॐउदरम्मेविशः । अस्तु इत्युदरं ॥ ॐ अंसौमेविशः । स्तां इत्यंसौ ॥ भेदेमंत्रावृत्तिः ॥ ॐ ग्रीवामेविशः । संतु इतिकंठदेशं ॥ ॐ श्रोणीमेविशः । स्तां इति कटिप्रदेशौ ॥ भेदेमंत्रावृत्तिः ॥ ॐ ऊरूमेविशः स्तां इतियुगपद्धस्तेनोरू ॥ ॐअरत्नीमेविशः । स्तां इति दक्षि-णवामहस्तौ ॥ भेदेमंत्रावृत्तिः ॥ ॐजानुनीमेविशः । स्तां इति जानुनी ॥ भेदेमंत्रा० ॥ ॐविशोमेऽगानि सर्वतः । संतु । इति शिरः-प्रभृतिपादांतानि सर्वाण्यंगानि ॥ ॐनाभिर्म्मेचित्तं । अस्तु इति नाभिं ॥ ॐविज्ञानंपायुर्म्मे । अस्तु इति पायुं ॥ पायुर्गुददेशः ॐ मेऽप-

चिंतिर्भसत् । अस्तु । इति स्त्रीप्रजननं ॥ भसच्छब्देन स्त्रीप्रजननं गौडा आहुः । नच यजमानस्यैतद्भवति ॥ अतः पत्नीविषयमेतत् ॥
इतिउवटो महीधरश्च ॥ ॐआनंदनंदावांडौमे । स्तां इति वृषणौ ॥ ॐमेभगःसौभाग्यंपसः । अस्तु इति लिंगं ॥ ॐजंघाभ्यांधर्म्मोऽसि ।
इति जंघे ॥ भेदेमंत्रावृ० ॥ ॐपद्भ्यांधर्मोऽसि । इति दक्षिणवामपादौ ॥ भेदेमंत्रावृ० ॥ ॐविशिराजाप्रतिष्ठितोऽसि । इति सर्वदेहं ॥
अथवा केवलं मंत्रजपः । अंगलिंगाभावात् ॥ इत्यंगालंभनं ॥ ततोऽग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि पयसि पायसं चरुं श्रपयित्वा
आज्यभागांतं ॥ तत्र विशेषः ॥ सक्षीरप्रणीताप्रणयनं ॥ पात्रासादने काष्मर्यमय्यौ स्रुवः स्रुक् च ॥ पयसि चरुश्रपणमिति विशेषः ॥
तथाच सूत्रं ॥ नैर्ऋतं पायसꣳ श्रपयित्वा काष्मर्यमय्यꣳस्रुक्स्रुवं प्रतप्य सम्मृज्येति । आज्यभागांते द्रव्यत्यागः ॥ तस्माच्छांतिं
प्रकुर्वीत ग्रहाणां क्रूरचेतसामित्यत्र व्यतीपातादौ तन्निमित्तकशांतिग्रहमखयोः समुच्चयः ॥ तत्रापि स्वतंत्रप्रयोगता वा सहप्र-
योगता वा ॥ ग्रहमखस्य च सर्वशांतिषु पूर्वांगत्वात्सहप्रयोगेऽपि पूर्वं ग्रहहोमः ॥ पश्चात्तत्तत्प्रधानहोम इति शांतिसारे ॥ ग्रहहोमः ॥
प्रधानहोमः ॥ पायसं चरुमभिघार्य ॥ असुन्वंतमिति चतस्रः स्थालीपाकेन जुहुयात् ॥ चतसृष्वप्याहुतिषु अयमेव मंत्रः ॥ एव-
मग्रे कृणुष्वपाज इत्यादौ ॥ ॐअसुन्वंतम० मस्तु स्वाहा ॥ इदंनिर्ऋतयेनमम ॥ अयमेव त्यागश्चतसृषु ॥ पंचदशाऽज्याहुतीश्चतुर्गृहीतेन
जुहोति ॥ कृणुष्वपाजइतिपंच मानस्तोकइति द्वे ॥ २ यातेरुद्रशिवातनूरितिषट् ॥ ॐअग्नीरक्षांꣳसिसेधतिशुक्र शोचिरमर्त्यः ॥ शुचिः
पावकईड्य इति ॥ १ ॥ त्वन्नःसोमविश्वतोरक्षाराजन्नघायतोनरिष्येत्वावतःसखेति ॐकृणुष्वपाजःप्र० पिष्ठैःस्वाहा ॥ इदमग्नयेनमम ॥
इतिपंचाज्याहुतयश्चतुर्गृहीतेन ॥ ॐमानस्तोकेत० हवामहेस्वाहा ॥ इदंरुद्रायनमम ॥ इतिद्वेआज्याहुतीचतुर्गृहीतेन ॥ ॐयाते-
रुद्रशिवा० कशीहिस्वाहा ॥ इदꣳरुद्रायनमम ॥ इतिषडाज्याहुतयश्चतुर्गृहीतेन ॥ उदको० ॥ ॐअग्नीरक्षांꣳसिसेधतिशुक्रशो-

चिरमर्त्यः ॥ शुचिः पावकईड्यः स्वाहा ॥ इदमग्नयेनमम ॥ इत्येकाज्याहुतिश्चतुर्गृहीतेन ॥ ॐत्वन्नः सोमविश्वतोरक्षाराजन्न-घायतोनरिष्येत्वावतः सखास्वाहा ॥ इदं सोमायनमम ॥ इत्येकाज्याहुतिश्चतुर्गृहीतेन ॥ इति पंचदशचतुर्गृहीताज्याहुतयः ॥ केचित्तु पंचेत्यादिका मंत्रगतसंख्यामाहुः ॥ तन्न । सर्वप्रायश्चित्तं पंचभिःप्रत्यृचमित्यादिवत् वचनेतृतीयांतत्वाभावात् । तथा कल्पनायां गौरव-प्रसंगाच्च । तस्मादाहुतिगतैव संख्येति भाष्ये ॥ पूजास्विष्टं० संपाद्यदानं च ॥ कृष्णा गौः कृष्णाश्चतिलाः हिरण्मयमूलं सप्तधान्यसंयुक्त-माचार्याय दद्यात् ॥ कृष्णोऽनड्वान् ब्रह्मणे दद्यात् ॥ नक्षत्रसूचकेभ्यो वासो दद्यात् ॥ अन्येभ्यो ब्राह्मणेभ्यः सुवर्णं दद्यात् ॥ रुद्रकलशोदकेन अभिषेकः ॥ आज्यावलोकनं ॥ कृसरपायसेन ब्राह्मणान् भोजयेत् ॥ तिलतंडुलसंपक्वः कृसरः सोऽभिधीयत इति कर्मप्रदीपे कात्या-यनः ॥ शर्करापायसेनेति भाष्ये पाठः ॥ विसर्जनं ॥ सार्पदैवत गंडांतजातानामेष एव विधिः ॥ इतिपरिशिष्टोक्तामूलजननशांतिः ॥

अथ कातीयपरिशिष्टोक्ताश्लेषानक्षत्रजननशांतिः ॥ आश्लेषाजननफलं ॥ श्रीः ॥ प्रथमे पादे सर्वाणि धनधान्यानि ॥ द्वितीये धननाशः ॥ तृतीये मातृनाशः ॥ चतुर्थे पितृनाशः ॥ कालावधिः । नृसिंहप्रसादे । नवमासं तथाश्लेषा । फलमित्यध्याहारः । पुत्रदर्शनवर्जिता इति च शांतिककालः ॥ शुभेऽह्नि नक्षत्रवेलायां वा ॥ प्रसवाश्लेषानक्षत्रात्सप्तविंशतितमे दिने यदाश्लेषानक्षत्र-मायाति तस्मिन्नाश्लेषानक्षत्रे आश्लेषाशांतिकं कुर्यात् ॥ तत्र प्रतिबंधश्चेच्छुभेऽह्नि ॥ सार्पदैवतगंडांतजातानामेष एव विधिरिति सूत्रात् मूलनक्षत्रवत्कुर्यात्सार्पे गंडे स्वनामतः इति मानवसंहितायां आश्लेषाशांतिविधौ उक्तत्वाच्च इति । इत्याश्लेषाशांतिकविधिः ॥ अथ प्रयोगः ॥ तत्रादौ गोमुखप्रसवः ॥ संकल्पः ॥ मम अस्य कुमारस्य अस्याः कुमार्या वा आश्लेषानक्षत्रप्रथमचरणादि-जननसूचितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां आश्लेषानक्षत्रजननशांतिं करिष्ये ॥ गणपतिपूजनादिअग्निस्थाप-

नांतं ॥ अग्नेःपूर्वत ईशान्यां वा महीद्यौरित्यादिविधिना कलशं प्रतिष्ठाप्य ॥ सर्वौषधीः सर्वगंधान् पंचरत्नानि श्वेतसर्षपांश्च प्रक्षिप्य ॥ तदुपरि बृहत् ताम्रपात्रं वंशपात्रं वा पूर्णपात्रं निधाय ॥ वरुणपूजनांतं कृत्वा ॥ तं कलशं स्पृष्ट्वा ॥ ॐ नमस्तइति सकलं रुद्राध्यायं १ ॐआशुःशिशानइति सप्तदशर्चमप्रतिरथसूक्तं २ कृणुष्वपाजइति पंचर्चं राक्षोघ्नं च जपेत् ॥ ततस्तस्मिन्पूर्णपात्रे शतौ-षधानि । तदलाभे शतावरीं हिरण्मयमूलं सप्तधान्यानि च वस्त्रे बध्वा निदध्यात् ॥ तदुपरि चतुःकुडवपरिमितान् तंडुलान् प्रक्षिपेत् । तंडुलोपरि सौवर्णं निष्कपरिमितमधोमुखं सर्पमभ्युत्तारणप्राणप्रतिष्ठापूर्वकमावाह्य ॥ ॐनमोऽस्तुसर्पेभ्य इति मंत्रेण पंचामृतवस्त्रयुग्म-यज्ञोपवीतसुगंधपंचवर्णपुष्पधूपदीपनानाभक्ष्यभोज्योपहारतांबूलनानाविधफलाद्युपचारैः संपूजयेत् ॥ सर्पदेवतायाः पूर्वादिदिक्षु नागा-ष्टकं पूजयेत् ॥ ॐअनंतायनमः । अनंतमावा० १ वासुकये० वासुकिं २ तक्षकाय० तक्षकं ३ कर्कोटकाय० कर्कोटकं ४ पद्माय० पद्मं ५ शेषाय० शेषं ६ कंबलाय० कंबलं ७ शंखपालाय० शंखपालं ८ ॥ ततः कलशस्य पूर्वादिचतुर्दिक्षु ॥ चतुरः कुंभान् ॐ महीद्यौरित्यादिविधिना पूर्णपात्रेषु वरुणपूजनांतं स्थापयेत् ॥ पूर्वकुंभे । समुद्रोदकं नद्युदकं सप्तमृत्तिकाश्च ॥ दक्षिणकुंभे । जीर्णकूपोदकं । देवदारुमुस्तासिद्धार्थकमलहरिद्राद्वयप्रियंगुगुडूचीचंदनानि च ॥ पश्चिमकुंभे । निर्झरोदकं सर्वौषधीश्च ॥ चतुर्थे अवटोदकं पूर्वोक्तसकल-कुंभद्रव्याणि च ॥ सर्वेषु कुंभेषु पंचपल्लवान् पंचरत्नानि च प्रक्षिप्य ॥ सर्वान् वस्त्रेण वेष्टयित्वा ॥ पूर्णपात्रेषु वरुणं संपूज्य ॥

ॐ समुद्रज्येष्ठाःसलिलस्य मध्यात्पुनानायंत्यनिविशमानाः ॥ इन्द्रो या वज्रीवृषभोरराद ता आपो देवी रिहमामवंतु ॥ १ ॥ या आपो दिव्याउतवास्रवन्ति खनित्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ता आपोदेवीरिहमामवंतु ॥ २ ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यञ्जनानाम् ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ ३ ॥ यासुरा-

ज्ञावरुणोयासुसोमोविश्वेदेवायासूर्जंमदन्ति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवन्तु ॥ ४ ॥ इति चतुर्भिर्मंत्रैः क्रमेणैकैकेन चतुरः कलशानभिमंत्रयेत् ॥ तदीशान्यां ग्रहस्था० ॥ रुद्रकलशस्था० ॥ ततोऽग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि पयसि स्थालीपाकं श्रपयित्वा आज्यभागांतं ॥ तत्र विशेषः ॥ सक्षीरप्रणीताप्रणयनं ॥ पात्रासादने ॥ काष्मर्यमयः स्रुवः ॥ काष्मर्यमयी स्रुक् च ॥ पयसि चरुश्रपणमिति ॥ आज्यभागांते ॥ द्रव्यत्यागः ॥ ग्रहहोमः ॥ प्रधानहोमः ॥ प्रत्येकंचतुर्गृहीतेनाज्येनाष्टोत्तरशतं च ॥ ॐ तत्सवितु० दयात् स्वाहा ॥ इदᳪसवित्रे० । १ । ॐव्वयᳪसोमव्रते० सचेमहिस्वाहा ॥ इदᳪसोमाय० । २ । ॐअसुन्वंतम० तुभ्यमस्तुस्वाहा ॥ इदंनिर्ऋतये० । ३ । ॐसहस्रशीर्षापु० गुलम् स्वाहा । इदंविष्णवे० ततः ॥ पंचर्चराक्षोघ्नेन प्रतिमंत्रं ॥ ॐकृणुष्वपा० पिष्ठैः स्वाहा ॥ इदमग्नयेनमम ॥ पंचसु त्यागः ॥ १ ॥ ॐतवभ्रमा० गुल्काःस्वाहा ॥ २ ॥ ॐप्रतिस्पशो० दधर्षीत् स्वाहा ॥ ३ ॥ ॐउदग्नेतिष्ठ० शुष्कम् स्वाहा । ४ । ॐऊर्ध्वोभव० स्वाहा । ५ । ॐमानोमहां० रीरिषः स्वाहा ॥ इदᳪरुद्राय नमम । अयंत्यागः पंचसु ॥ ॐमानस्तोके० हवामहे स्वाहा । २ । ॐयाते रुद्रशिवातनूरघोरा० शीहि- स्वाहा । ३ । ॐ यामिषुंगिरि० जगत्स्वाहा । ४ । ॐअसौयस्ताम्रो० ईमहेस्वाहा । ५ ॥ उदकोप० ॥ ततश्चरुमभिघार्य ॥ ॐनमोस्तुसर्पेभ्यो० मर्पेभ्योनमःस्वाहा ॥ इदᳪसर्पेभ्यो न० ॥ इति अष्टोत्तरसहस्रमष्टोत्तरशतं वा जुहुयात् ॥ ततश्चरुणैकैकयाऽऽहुत्या नाममंत्रेण नामाष्टकहोमः ॥ ॐ अनंताय नमःस्वाहा । इदमनंताय० । १ । ॐ वासुकये० २ ॐतक्षकाय० ३ ॐ कर्कोटकाय० ४ ॐ पद्माय० ५ ॐ शेषाय० ६ ॐकंबलाय० ७ ॐशंखपालाय० ८ ॥ ततः शतावर्यीमूलानां होमः ॥ पूर्णपात्रोपर्यधिवासित- हिरण्मयमूलवर्जं शतावर्यीनां पंचभागान् कृत्वा । घृतेनाभ्यज्य । ॐ मूलाय नमःस्वाहा १ ॐ मूलदेवताभ्यो नमः स्वाहा २ ॐ

मूलकरणेभ्यो नमःस्वाहा ३ ॐ मूलविश्वाय नमःस्वाहा ४ ॐ सर्पमूलाय नमःस्वाहा ५ इति शतौषधीमूलहोमः ॥ ततः प्रजापतिं
समस्तव्याहृतिभिस्तिलैरष्टोत्तरशतमष्टाविंशति वा ॥ ॥ ततः ॥ पूजास्विष्टं नवाहुत्यो बलिः पूर्णाहुतिस्तथा ॥ ॥ पूर्णाहुत्यंते
अभिषेकः ॥ यजमानपत्न्योः सर्वौषधीतिलसर्षपकल्केनोद्वर्तनं ॥ अग्नेः पश्चिमत औदुंबरीमासंदीमास्तृणाति ॥ ॐ क्षत्रस्ययोनिरसिक्षत्र
स्यनाभिरसि॥तदुपरि कृष्णाजिनमास्तृणाति ॥ ॐमात्वाहिᳫंसीन्मामाहिᳫंसीः ॥ तदुपरि श्वेतवस्त्रं प्राग्दशमुदग्दशं वा तूष्णीं स्तृणाति॥
तासिन्नास्ते पिताशिशुर्जननी च ॥ ॐनिषसादधृतव्रतोवरुणःपस्त्यास्वा ॥ साम्राज्यायसुक्रतुः ॥ राजतसौवर्णरुक्मनिधानं पादयोः शिरसि
वा सौवर्णं ॥ राजतं सव्यपादाधः ॥ ॐ विद्योत्पाहि सौवर्णदक्षिणपादाधःशिरसिवा ॐ मृत्योःपाहि । तत्तद्दिगवस्थितसर्त्विगाचार्यः ॥
तत्रासीनान् संपातेनाभिषिंचति शिरसोऽध्यनुलोमं ॥ त्रयाणां संस्कार्यत्वात् प्रतिसंस्कार्यं भेदेन समंत्रकोऽभिषेकः ॥ पूर्वकुंभेन ॥
संततधारया सर्वत्र ॥ ॐ देवस्य० भ्यां ॥ अश्विनोर्भै० वर्चसायाभिषिंचामि १ दक्षिणकुंभेन ॥ ॐ देवस्य० सरस्वत्यैभै० २ पश्चिम-
कुंभेन ॥ ॐदेवस्य० इंद्रस्येंद्रि० ३ उदक्कुंभेन ॥ ॐ देवस्य० अश्विनो० सरस्वत्यै० इंद्रस्येंद्रियेण० भिषिंचामि ॥ मध्यमकुंभेन ॥
तत्र मंत्राः ॥ ॐआपोहिष्ठेतितिस्रः ३ ॥ ततः पुनः सर्त्विगाचार्यः पंचभिः कलशैर्युगपदभिषेकं कुर्यात् ॥ तत्र मंत्राः ॥ ॐ आ-
पोहिष्ठेतितिस्रः ३ ॐइदमापःप्रव० १ ॐआपोअद्यान्व वचनेनच १ ॐमानस्तोके० १ ॐइमम्मे० १ ॐतत्त्वांयामि०
१ ॐ त्वन्नोअग्ने० १ॐसत्वंनोअग्ने० १ ॐपुनंतुमेतिनव ९ ॐसमुद्रज्येष्ठाइतिचतस्रः ४ पुरुषसूक्तं १६ ॐ सहस्राक्षं शत-
धारमृषिभिः पावनं कृतम् ॥ तेन त्वामभिषिंचामि पावमान्यः पुनंतु ते ॥ १ ॥ भगं ते वरुणो राजा भगं सूर्योबृहस्पतिः ॥
भगमिंद्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ २ ॥ यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि ॥ ललाटे कर्णयोरक्ष्णोरापस्तत् घ्नंतु सर्वदा

॥ ३ ॥ एतद्धै पावनं स्नानं सहस्राक्षमृषिस्मृतं ॥ तेन त्वां शतधारेण पावमान्यः पुनंत्विमाः ॥ ४ ॥ शक्रादिदशदिक्पाला ब्रह्मेशकेशवादयः ॥ आपस्ते घ्नंतु दौर्भाग्यं शांतिं ददतु सर्वदा ॥५॥ ॐ सुमित्रिया०द्वेष्मः ॥६॥ समुद्रा गिरयो नद्यो मुनयश्च पतिव्रताः ॥ दौर्भाग्यं घ्नंतु ते सर्वे शांतिं यच्छंतु सर्वदा ॥७॥ पादगुल्फोरुजंघासु नितंबोदरनाभिषु ॥ स्तनोरुबाहुहस्ताग्रग्रीवास्कंसांगसंधिषु ॥८॥ नासाललाटकर्णभ्रूकेशांतेषु च यत्स्थितं ॥ तदापो घ्नंतु दौर्भाग्यं शांतिं यच्छंतु सर्वदा ॥९॥ अभिषेकांते नीराजनं ॥ स्नानं ॥ आचमनं ॥ मांगल्यतिलककरणं ॥ दंपत्योः शुभ्रवस्त्रपरिधानं ॥ आचार्याय पूर्ववस्त्राणां दानं ॥ स्नानांते मूलशांतिवदंगालंभनं ॥ स्नानांते शिरोमे श्रीर्यश इत्यादिभिर्मंत्रैरंगान्यालभेते यथालिंगमिति ॥ ॥ ॐ शिरोमे श्रीः । अस्तु । इति शिर आलभते । ॐ यशोमेमुखं । अस्तु । इति मुखं ॥ ॐ त्विषिर्मे केशाश्च श्मश्रूणि । संतु । इति शिरस्थकेशान् श्मश्रूणि मुखजरोमाणि ॥ ॐ राजा मे प्राणो अमृतं । अस्तु । इति नासिकां ॥ ॐ सम्राणमेचक्षुः । अस्तु । इति युगपच्चक्षुषी ॥ ॐ विराणमेश्रोत्रं । अस्तु । इति श्रोत्रे ॥ भेदे मंत्रावृत्तिः ॥ ॐ जिह्वामेभद्रं । अस्तु । इति जिह्वां ॥ ॐ वाङ्मेमहः । अस्तु । इति मुखं ॥ ॐ मनोमेमन्युः । अस्तु । इति हृदयं । उदको० ॥ ॐ स्वराणमेभामः । अस्तु । इति भ्रूमध्यं ॥ ॐ मोदासेअंगुलीः । संतु । इतिदक्षिणवामकरपादांगुलीश्च ॥ भेदे मंत्रावृत्तिः ॥ ॐ प्रमोदामेअंगानि । संतु । इति शिरःप्रभृतिपादांतान्यंगानि ॥ ॐ मित्रम्मेसहः । अस्तु । इति शिरःप्रभृतिपादांतांगगतंबलं ॥ ॐ बाहूमेबलमिंद्रियं । स्तां । इति दक्षिणवामबाहू ॥ भेदे मंत्रावृत्तिः ॥ ॐ हस्तौमेकर्म्मवीर्यम् । स्तां । इति हस्तौ युगपत् ॥ ॐ आत्मामेक्षत्रं । अस्तु । इति हृदयं । उदको० ॥ ॐ उरोमेक्षत्रं । अस्तु । इति हृदयं । उदको० ॥ ॐ उरोमेक्षत्रं अस्तु । इति उरः ॥ ॐ पृष्टीर्म्मेराष्ट्रं । अस्तु । इति पृष्ठदेशं ॥ ॐ उदरम्मेविशः । अस्तु । इत्युदरं ॥ ॐ अंसौमेविशः । स्तां । इत्यंसौ ॥ भेदे मंत्रावृत्तिः ॥ ॐ ग्रीवामेविशः । संतु । इति कंठदेशान् ॥ ॐ श्रोणीमेविशः । स्तां । इति कटिप्रदेशौ ॥

भेदे मंत्रावृत्तिः॥ ॐ ऊरूमेविर्शः। स्तां। इति युगपद्धस्तेनोरू॥ ॐ अरत्नीमेविर्शः। स्तां। इति दक्षिणवामहस्तौ॥ भेदे मंत्रावृत्तिः॥ ॐजानुनीमेविर्शः। स्तां। इति जानुनी॥ भेदे मंत्रावृत्तिः॥ ॐ विश्वोमेऽगांनिसर्वतः संतु। इति शिरःप्रभृतिपादांतान्यंगानि॥ ॐ नाभिर्म्मेचित्तं अस्तु। इति नाभिं॥ ॐ विज्ञानंपायुर्म्मे। अस्तु। इति पायुं १ पायुर्गुदप्रदेशः॥ ॐ मेऽपचितिर्भसत्। अस्तु। इति स्त्रीप्रजननं॥ ॐ आनंदनंदावांडौ मे। स्तां। इति वृषणौ॥ ॐ मेभगःसौभाग्यंपसः। अस्तु। इति लिंगं॥ ॐजंघाभ्यां धर्म्मोऽसि। इति जंघे॥ भेदे मंत्रा०॥ ॐपद्भ्यांधर्म्मोऽसि। इति दक्षिणवामपादौ॥ भेदे मंत्रा०॥ ॐविशिराजाप्रतिष्ठितः। असि। इति सर्वदेहं। केवलमंत्रजपो वा॥ इत्यंगालंभनं॥ ॥ ततः श्रेयः संपाद्य दानं॥ आचार्यपूजनं॥ कृष्णा गौः। कृष्णाश्च तिलाः॥ सौवर्णं मूलं॥ सप्तधान्यानि च सद्क्षिणानि आचार्याय दद्यात्॥ धुरंधरमनड्वाहं च दक्षिणां दद्यात्॥ कृष्णमनड्वाहं दक्षिणां ब्रह्मणे दद्यात्॥ नक्षत्रसूचकेभ्यो वस्त्रदानं॥ अन्येभ्यो ब्राह्मणेभ्यः सुवर्णदानं॥ रुद्रकलशोदकेनाभिषेकः॥ आज्यावलोकनं तद्दानं च॥ शर्करापायसेन कृसरपायसेन वा ब्राह्मणभोजनं॥ कर्मसंपूर्णतावाचनं॥ विसर्जनं॥ सार्पदैवतगंडांतजातानामेष एव विधिः॥ ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे कातीयपरिशिष्टोक्ता आश्लेषानक्षत्रजननशांतिः॥

अथ ज्येष्ठानक्षत्रजननशांतिः॥ श्रीः॥ तत्रादौ ज्येष्ठाजननफलमाह॥ **ब्रह्मयामले**॥ ज्येष्ठादौ जननीमाता द्वितीये जननीपिता॥ तृतीये जननीभ्राता स्वयं माता चतुर्थके॥ आत्मानं पंचमे हंति षष्ठे गोत्रक्षयो भवेत्॥ सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे॥ नवमे श्वशुरं हंति सर्वं हंति दशांशके॥ जननीमाता मातामही॥ जननीपिता मातामहः॥ जननीभ्राता मातुलः॥ वसिष्ठः॥ सुरेशताराजनिता धवाग्रजं द्विदैवताराजनिता तु देवरं॥ पुरंदरर्क्षे जनितः सुतस्तथा स्वस्याग्रजं हंति न पुत्रिका यदि॥

सुरेशतारा ज्येष्ठानक्षत्रं ॥ द्विदैवं विशाखान० । पुरंदरर्क्षं ज्येष्ठा ॥ फलावधिः । नृसिंहप्रसादे ॥ ज्येष्ठा पंचदशे मासि पुत्रदर्शनवर्जिता । फलमित्यध्याहारः ॥ वृद्धगार्ग्यः ॥ सुखासीनं मुनिश्रेष्ठं गर्गं मुनिगणान्वितं ॥ कृतांजलिपुटो भूत्वा परिपप्रच्छ शौनकः ॥ शिशुगंडापरनामकज्येष्ठागंडलक्षणं ॥ शौनक उवाच ॥ ज्येष्ठानक्षत्रसंभूतगंडदोषविनिर्णयं ॥ तस्य शांतिविधानं च वद मे मुनिसत्तम ॥ शृणु शौनक यत्नेन गंडदोषविनिर्णयं ॥ ज्येष्ठानक्षत्रसंभूतं गंडदोषविनिर्णयं ॥ तस्य शांतिविधानं च यथावत्कथयाम्यहं ॥ गर्ग उवाच ॥ घटिकैका च मैत्रांते ज्येष्ठादौ घटिकाद्वयं ॥ मैत्रमनुराधा ॥ तयोः संधिरिति ज्ञेयं शिशुगंडं समीरितं ॥ प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके । पादत्रये जातनरो ज्येष्ठोऽप्यत्र प्रजायते ॥ ज्येष्ठांत्यपादजातस्तु पितुः स्वस्य विनाशनः ॥ जायते नात्र संदेहो दशाहाभ्यंतरे तथा ॥ ज्येष्ठर्क्षेऽथ पुमान् जातो ह्यग्रजस्य विनाशनः ॥ ज्येष्ठर्क्षे कन्यका जाता हंति शीघ्रं धवाग्रजं ॥ तच्छांतिं तस्य वक्ष्यामि गंडदोषप्रशांतये ॥ कालमाह ॥ सुदिने शुभनक्षत्रे चंद्रताराबलान्विते ॥ सूतकांतेऽथवा कुर्याज्ज्येष्ठाशांतिं विधानतः ॥ देवता आह ॥ वज्रांकुशधरं देवमैरावतगजान्वितं ॥ कुर्याच्छचीपतिं रम्यं देवेंद्रं सुरनायकं ॥ कर्षमात्रसुवर्णेन कर्षार्द्धेनाथ पादतः ॥ तद्विधानं प्रकुर्वीत वित्तशाठ्यं न कारयेत् ॥ शालितंडुलसंपूर्णकुंभस्योपरि पूजयेत् ॥ इंद्रायेन्दोमरुत्वन्न इतिमंत्रेण वाग्यतः ॥ गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः ॥ पूजयेद्विधिना विप्र लोकपालगणान्वितं ॥ लोकपालगणान्वितमितींद्रस्योपसर्जनं तत्र गणशब्दस्योपादानादिंद्रस्यात्रप्रधानत्वेन गणपदवाच्यत्वाभावेन चंद्रव्यतिरिक्तान् अग्न्यादीन्नवलोकपालान्पूजयेदित्यर्थः ॥ रक्तवस्त्रद्वयोपेतं पूजयेत्सुरनायकं ॥ तत्र संस्थापयेत्कुंभांश्चतुर्दिक्षु विशेषतः ॥ तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितं ॥ पुण्योदकसमायुक्तान् वस्त्रयुग्मेन वेष्टितान् ॥ कुंभेषु विन्यसेद्धीमान् पंचगव्यं समंत्रकं ॥ पंचामृतं पंचरत्नं मृत्तिकाः सप्तसंख्यकाः ॥ पंचवृक्षकषायांश्च पंचपल्लवकांस्तथा ॥ सुवर्णं कुश-

दूर्वाश्च शतौषधीर्विनिक्षिपेत् ॥ पूजयेद्वारुणैर्मंत्रैश्चतुः कुंभान्प्रयत्नतः ॥ त्वन्नो अग्ने जपेदादौ सत्वन्नोपि द्वितीयके ॥ समुद्रज्येष्ठा इति चेमंमेगंगे चतुर्थके॥ पूजयेद्वस्त्रयुग्माद्यैश्चतुरः कलशानपि ॥ कलशस्थान् वरुणानपीत्यर्थः ॥ जपं कुर्युः प्रयत्नेन मंत्रैरेभिर्द्विजोत्तमाः ॥ आनोभद्राजपं चादौ भद्राअग्ने द्वितीयकं ॥ तृतीयं पौरुषं सूक्तं कद्रुद्राय चतुर्थकं ॥ आचार्यो मूलमंत्रेण जपं कुर्याद्विशेषतः ॥ इंद्रसूक्तं रुद्रजाप्यं जपेन्मृत्युंजयं ततः ॥ इंद्रं संपूज्य देवेशं वरुणं कुंभसंस्थितं ॥ सुसंकल्पविधानेन होमकार्यं ततश्चरेत् ॥ समिद्भिर्ब्रह्मवृक्षस्य शतमष्टोत्तरं तथा ॥ अष्टोत्तरसहस्रकमितिक्वचित्पाठः ॥ ब्रह्मवृक्षः पलाशः ॥ "ब्रह्म वै पलाश" इति शतपथश्रुतेः ॥ सर्पिषा चरुणा चैव मूलमंत्रेण वाग्यतः ॥ हुनेज्जाप्यं च तेनैव यत इंद्रभयेति च ॥ तिलान् व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ॥ भार्याशिशुसमोपेतं यजमानं विशेषतः ॥ अभिषेकं प्रकुर्वीत सूक्तैर्वारुणसंज्ञकैः ॥ समुद्रज्येष्ठादिभिर्मंत्रैरिमंमेवरुणस्तथा ॥ द्यौःशांत्येत्यादिभिर्मंत्रैरभिषेकं ततश्चरेत् ॥ षोडशीत्यादिभिर्मंत्रैरिति ज्योतिर्निबंधे पाठः । ते मंत्रा महार्णवे प्रसिद्धाः । अभिषेकनिवृत्तौ तु यजमानः समाहितः ॥ शुक्लवस्त्राणि धृत्वाथ कुर्यादाज्यावलोकनं ॥ रूपंरूपेति मंत्रेण चित्रं तच्चक्षुरेव च ॥ देवतापुरतः स्थित्वा धूपदीपनिवेदनं ॥ दद्यात्स्वाचमनं सम्यक् तांबूलार्घ्यं तथैव च । नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते ॥ गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये ॥ कार्यं यत्पूजकादीनां शुभं लब्ध्वा समर्पयेत् ॥ आचार्यऋत्विगादीनां कारितं यत्फलं शुभं ॥ जप्त्वा तु तत्फलं सर्वं देवेंद्राय समर्पयेत् ॥ आचार्यादिभिः कारितं यत्कर्म तज्जन्यं शुभं फलं चाचार्यादिभ्यः प्रतिगृह्येंद्राय समर्पयेदित्यर्थः ॥ आचार्याय च गां दद्यात् सुशीलां च पयस्विनीं ॥ रक्तवर्णां वत्सयुतां सर्वालंकारभूषितां ॥ वस्त्रयुग्मपिधानां च यथाविभवसारतः ॥ यक्षगंधर्वसिद्धैश्च पूजितोऽसि शचीपते ॥ दानेनानेन देवेश गंडदोषं विनाशय ॥ अष्टोत्तरशतं संख्या कुर्याद्ब्राह्मणभोजनं ॥ तेभ्योऽपि दक्षिणां दत्त्वा प्रणिपत्य

क्षमापयेत् ॥ अज्ञानाद्वाऽथ वा ज्ञानाद्वैकल्याद्वा धनस्य च ॥ यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षंतुमर्हसि ॥ इति संप्रार्थयेद्देवमिंद्राणीपतिमुत्तमं ॥ ज्येष्ठाशांतिमिमां कृत्वा यथाविध्युक्तमार्गतः ॥ गंडदोषं विनिर्जित्य आयुष्मान् जायते नरः ॥ इत्युक्तं वृद्धगर्गेण शौनकाय विशेषतः ॥ ज्येष्ठानक्षत्रसंभूतगंडदोषप्रशांतये ॥ इति वृद्धगार्ग्योक्ता ज्येष्ठानक्षत्रजननशांतिः ॥

अथ ज्येष्ठानक्षत्रशांतिप्रयोगः ॥ श्रीः ॥ तत्रादौ ज्येष्ठाभागशो ज्येष्ठाजननफलं ॥ प्रथमे भागे मातामहीनाशः १ द्वितीये मातामहनाशः २ तृतीये मातुलनाशः ३ चतुर्थे स्वमातृनाशः ४ पंचमे स्वस्य नाशः ५ षष्ठे स्ववंशनाशः ६ सप्तमे उभयकुलनाशः ७ अष्टमे ज्येष्ठभ्रातुर्नाशः ८ नवमे श्वशुरनाशः ९ दशमे सर्वनाशः १०॥ सकलज्येष्ठाजननफलं ॥ पादत्रये ज्येष्ठपुत्रजनने चतुर्थे पादे ज्येष्ठस्य कनिष्ठस्य वा पुमपत्यस्य जनने पितुः ज्येष्ठभ्रातुः स्वस्य च नाशः ॥ कन्याजनने ज्येष्ठदेवरस्य नाशः ॥ विशाखायां तु कन्याजनने ज्येष्ठस्य कनिष्ठस्य च देवरस्य नाशः ॥ ज्येष्ठागंडांतलक्षणं तत्फलं च ॥ अनुराधानक्षत्रस्य अंतिमा एका १ घटिका ॥ ज्येष्ठायाः प्रथमद्वितीये द्वे घटिके २ तयोः संधिः शिशुगंड इत्युच्यते ॥ गंडोत्पत्तौ पितृमातृबंधूनां स्वस्य च नाशः ॥ जीवति चेत् स भाग्यवान् भवेदिति ॥ ॥ तत्रादौ गोमुखप्रसवः ॥ संकल्पः ॥ अस्य शिशोर्ज्येष्ठानक्षत्रजननसूचितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां वृद्धगार्ग्योक्तां ज्येष्ठाजननशांतिं करिष्ये ॥ गणेशपूजनादि अग्निस्थापनांतं ॥ अग्नेः पूर्वतो ॐमहीद्यौरित्यादिविधिना शालितंडुलपूर्णं कलशं प्रतिष्ठाप्य पूर्णपात्रे वरुणपूजनांतं ॥ पूर्णपात्रोपरि कर्षतदर्द्धतदर्द्धान्यतरसौवर्णप्रतिमायां शचीसहितं ऐरावतारूढं वज्रांकुशद्विभुजं इंद्रं अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं आवाह्य ॐत्रातारमिंद्रं इतिमंत्रेण षोडशोपचारैः पूजयेत् ॥ वस्त्रार्पणसमये रक्तवस्त्रद्वयं नैवेद्यसमये शष्कुल्यादि नानाभक्ष्यं निवेदयेत् ॥ ततः परित आग्नेयादिक्रमेणेंद्रव्यतिरिक्तान्नवदिक्पालानावाह्य

गंधादिभिरर्चयेत् ॥ ततस्तत्पुरत उत्तरतो वा मध्ये शतच्छिद्रं बृहत्कलशं तच्चतुर्दिक्षु चतुरः कलशान् मध्यममारभ्य प्रादक्षिण्येन ॐमहीद्यौरित्यादिविधिना संस्थाप्य । वरुणस्योत्तंभनमितिपुण्योदकेनापूर्य । तेषु गायत्र्यादिभिः पंचगव्यं । पयः-पृथिव्यादिभिः पंचामृतं । परिवाजपतिरिति पंचरत्नानि । स्योनापृथिवीति सप्तमृत्तिकाः । अश्वत्थेव इति पंचपल्लवान् तत्कषायांश्च । हिरण्यगर्भ इति हिरण्यं । पवित्रेस्थ इतिकुशान् । कांडात्कांडादिति दूर्वाः । याओषधीरिति सर्वौषधीश्च मंत्रावृत्त्या प्रक्षिप्य । सुवासुवासा इति वस्त्रयुग्मवेष्टितान् कृत्वा । पूर्णपात्रेषु क्रमेण मध्यमकलशे ॐतत्त्वायामि० १ पूर्वकलशे ॐत्वन्नोअग्ने० २ दक्षिणकलशे ॐसत्वन्नोअग्ने० ३ पश्चिमकलशे ॐसमुद्रोसिनभं० ४ उत्तरकलशे ॐइमम्मेवरुण० ५ इत्यावाह्य पूजयेत् ॥ ततश्चतुर्षु कुंभेषु ऋत्विजश्चत्वारि सूक्तानि जपेयुः ॥ आनोभद्रा इति दशर्चं १ भद्राअग्नेरिति द्वादशर्चं २ पुरुषसूक्तं षोडशर्चं ३ कद्रुद्रायेति नवर्चं ४ ॥ द्वादशर्चं नवर्चं च सूक्तं कृष्णचतुर्दशीशांतौ द्रष्टव्यं ॥ तत आचार्य ऐंद्रकलशे ॐत्रातारमिन्द्रमिति अष्टोत्तरशतादिसंख्यया जपेत् ॥ तत ॐ आयात्विंद्रइति अष्टचंद्रस्यानुवाकस्य जपः । अध्याय २० मंत्राः ॥ आयात्विंद्रो० ४७।१। आनइंद्रोदूरादा० २ आनइंद्रोहरिभि० ३ त्रातारमिंद्रं० ४ इंद्रःसुत्रामा० ५ तस्यवयꣳसुमतौ० ६ आमंद्रैरिंद्रह० ७ एवेदिंद्रंवृषण० ॥८॥५४॥ रौद्राध्याय जपः ॥ आद्यानुवाको वा ॐ त्र्यंबकमिति मृत्युंजयजपोऽष्टोत्तरशतादिसंख्यया ॥ ९ ॥ ततो ग्रहस्थाप० ॥ रुद्रकलशस्था० ॥ ततोऽग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादिचरुं श्रपयित्वा आज्यभागांतं ॥ द्रव्यत्यागः ॥ ग्रहहोमः ॥ प्रधानहोमः ॥ पलाशसमिद्भिश्चरुणा आज्येन च प्रतिद्रव्यमष्टोत्तरशतसंख्याकाभिः ॐत्रातारमिंद्र० धात्विंद्रःस्वाहा ॥ इदमिंद्रायनममेति । प्रधानहोमांते १६ ॥ त्रातारमिंद्रमिति मंत्रजपः ॥ ततः॥ प्रजापतिमष्टोत्तरशततिलाहुतिभिः ॥ ततः पूजा स्विष्टं नवाहुत्यो बलिः पूर्णाहुतिस्तथा ॥ श्रेयः संपाद्य दानं च अभिषेकः ॥ ततोभार्याशिशु-

सहितयजमानस्याभिषेकः ॥ तत्र मंत्राः ॥ वारुणसूक्तानि ॥ ॐसमुद्रंगच्छस्वा० पृण १ मापोमौषधीर्हिं० व्वयंद्विष्मः २ ॥ हविष्मती-
रिमा० अस्तुसूर्य्यः १ अग्नेव्वोपन्नगृ० त्वध्वरम् ॥ २ ॥ ॐअपोदेवामधुमतीरिति चतस्रः । अपोदेवाश्चतस्रइत्यनुवाकसूत्रं ॥ समुद्रं
गच्छहविष्मतीर्द्विकौइत्यनुवाकसूत्रं ॥ समुद्रं लिंगोक्तानि द्वादशदिवंतेस्वरुः । मापोहृदयशूलं । धाम्नोवारुणं । यदाहुर्वारुणीगायत्र्य-
नवसाना । सुमित्रियान आप । हविष्मतीलिंगोक्तदेवतानुष्टुप् । अग्नेर्वश्वत्वार्यपां ॥ अमूरापोगायत्रीमेधातिथिः । इति सर्वानुक्रम-
णिका ॥ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोररादाताआपोदेवीरिहमामवंतु ॥ १ ॥
याआपोदिव्याऽउतवास्रवंतिखनित्रिमाऽउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ॥ २ ॥ या-
सांराजावरुणोयातिमध्येसत्यानृतअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ ३ ॥ यासुराजा-
वरुणोयासुसोमोविश्वेदेवायासूर्ज्जम्मदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥४॥ इति चतस्रः ४ ॥ इमम्मे
व्वरुण० चके इत्येका । १ । द्यौः शांतिरं० शांतिरेधि ॥ अभिषेकांते आज्यावलोकनं तद्दानं च । इंद्रं गंधाद्युपचारैः संपूज्य ॥ अर्घ्यं
दद्यात् ॥ तत्र मंत्रः ॥ नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते ॥ गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये ॥ १ ॥ इति ॥ आचार्यादि-
ऋत्विग्भ्यः परिगृहीतं होमजपादिशांतिकश्रेय इंद्राय समर्प्य ॥ आचार्याय सुशीलां पयस्विनीं रक्तवर्णां सवत्सां वस्त्रद्वययुतां सालं-
कारां गां दद्यात् ॥ तत्र मंत्रः ॥ यक्षगंधर्वसिद्धैश्च पूजितोसि शचीपते ॥ दानेनानेन देवेश गंडदोषं प्रशामयेति ॥ अस्या गोर्दक्षि-
णात्वान्न दक्षिणांतरं ॥ अष्टोत्तरशतं ब्राह्मणभोजनं ॥ तेभ्यो दक्षिणादानं च ॥ प्रणिपत्य ॥ ममापराधान् क्षमध्वं इति क्षमाप्य ॥ इंद्रं प्रार्थ-

येत् ॥ अज्ञानादथवा ज्ञानाद्वैकल्याद्वा धनस्य च ॥ यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षंतुमर्हसीति ॥ विसर्जनं ॥ आशिषो गृहीत्वा भुंजीतेति ॥ ॥ इतिशुक्लयजुःशाखीयकर्मकांडप्रदीपे सग्रहमखा वृद्धगार्ग्योक्ता ज्येष्ठाजननशांतिः ॥

अथोत्तराफल्गुनीतिष्यचित्रापूर्वाषाढानक्षत्रजननिमित्ता तथैतन्नक्षत्राधिकरणकतिथिगंडांतजननिमित्ता च शांतिः ॥ श्रीः ॥ अथैतन्नक्षत्राणां जनने दुष्टाश्चरणाः ॥ नृसिंहप्रसादे ॥ चित्राद्यर्धे पुष्यमध्ये द्विपादे पूर्वाषाढाधिष्ण्यपादे तृतीये । जातः पुत्रश्चोत्तराद्ये विधत्ते पित्रोर्भ्रातुः स्वस्य चापि प्रणाशं ॥ इति ॥ चित्रायाः प्रथमद्वितीयचरणौ । पुष्यस्य द्वितीयतृतीयचरणौ । पूर्वाषाढानां तृतीयश्चरणः । उत्तराफल्गुन्योः प्रथमश्चरणः । क्रमेणैते चरणा दुष्टाः । कालावधिस्तत्रैव । द्विमासं चोत्तरादोषः पुष्ये चैव त्रिमासिकः । पूर्वाषाढाऽष्टमे मासि चित्रा षाण्मासिकं फलमिति ॥ अतस्तत्रैव शांतिः ॥ नान्यत्रानुक्तेः । पुष्ये तु प्रथमचतुर्थचरणयोर्गोमुखप्रसवमात्रं । पूषाश्विनोर्गुरौ सार्पमघाचित्रैंद्रमूलभे । एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथेति गोमुखप्रसवोक्तगार्ग्यवचनात् । तथा अंधभत्वात् केवलो ग्रहयज्ञश्च । कुलनाशोऽधभे भवेदिति । तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूरचेतसामिति च वसिष्ठोक्तेः । तस्माच्चित्रायास्तृतीयचतुर्थचरणयोर्गोमुखप्रसव एव । पूर्वाषाढायाः प्रथमद्वितीयचतुर्थचरणेषु । तथा उत्तराफल्गुन्योर्द्वितीयतृतीयचतुर्थपादेषु । अंधभत्वात्केवलो ग्रहयज्ञः । पुत्रमित्यत्र विशेष्यगतपुल्लिंगविवक्षया पुत्रशब्दः पुमपत्यपरः । अतश्चकारः कन्यासमुच्चयार्थः । उक्तर्क्षचतुष्के तिथिलग्ननक्षत्रगंडांते च शांतिं दानविशेषं चाह उत्तरगार्ग्यः ॥ अमुक्तेतरजातस्य सूतकांत्यदिने पिता । शांतिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत् । तिथिगंडे त्वनड्वाहं नक्षत्रे धेनुरुच्यते । कांचनं लग्नगंडे तु गंडदोषो विनश्यति । नामैकदेशे नामग्रहणमिति गंडशब्दो गंडांतवाचकः । आद्यभागे पितुर्गंडं त्रयाणामभिषेचनं । इतरत्र शिशोर्मातुरभिषेकं च कारयेत् । उत्तरे तिलपात्रं स्यात्पुष्ये

गोदानमुच्यते । अजाप्रदानं त्वाष्ट्रे च पूर्वाषाढे तु कांचनं इति। उत्तरे उत्तराफल्गुन्योः । त्वाष्ट्रे चित्रायां । अभुक्तेतरजातस्येत्यस्यायमर्थः । अभुक्तशब्देन तिथ्यादिगंडांतसंबंधिनां निषिद्धकालानां पूर्वार्द्धं उच्यते । इतरशब्देनार्थिकस्तेषामेवोत्तरार्द्धं उच्यते । तत्रोत्तरार्द्धे जनने शांतिरेव । न शांतिकाद्बहिः प्रयोगं दानमिति बोध्यते । पूर्वार्द्धे जनने तु शांतिकाद्बहिः प्रयोगं दानमप्याह तिथिगंडे त्वित्यादिना । नक्षत्रे नक्षत्रगंडांते । सार्पेन्द्रमूलनक्षत्रगंडांतेषु । नतूत्तराफल्गुन्यादौ गंडांते। तत्र उत्तरे तिलपात्रं स्यादिति अग्रे दानांतरस्य वक्ष्यमाणत्वात् । अत्रापि च तिथिगंडे इत्यादि सप्तम्या पूर्वार्द्धे जनने नालच्छेदनात्पूर्वं गंडांतोत्तरार्द्धाधिकरणकं दानं कार्यमिति बोध्यते । पूर्वोत्तरवचसामालोचनेनैव निमित्तलाभात् । आद्यभागे पितुर्गंडमिति तु उत्तरार्द्धापेक्षया पूर्वार्द्धे दोषाधिक्यं व्यक्तयति । उत्तरे तिलपात्रं स्यादित्यादावप्येवं । पूर्वार्द्धे जन्मनि । उत्तरार्द्धे दानानि कर्तव्यानीत्युच्यते । अतएव शांतिविधौ ॥ कुर्याच्छांतिं प्रयत्नेनेत्यत्र प्रयत्नेनेतिपदं पूर्वार्द्धोत्तरार्द्धयोर्जन्मनि शांतिर्नियमेन कर्तव्येति ज्ञापनार्थं । त्रयाणामभिषेचनमिति त्रयाणां मातापितृशिशूनां । इतरत्रेत्युत्तरार्द्धे शिशोर्मातुश्चेति द्वयोरेवेति ॥ अथ शांतिः ॥ उत्तरगार्ग्यः ॥ उत्तरातिष्यचित्रासु पूर्वाषाढोद्भवस्य च । कुर्याच्छांतिं प्रयत्नेन नक्षत्राकारजं बुधः ॥ सुवर्णेन तदर्द्धेन यथावित्तानुसारतः । नक्षत्राधिपते रूपं कृत्वा वस्त्रद्वयान्वितं ॥ वरुणस्यार्चनं कार्यं स्वस्तिवाचनपूर्वकं ॥ अत्र रूपं विशेष्यं । नक्षत्राकारजमिति तद्विशेषणं । गुणगुणिभावेनाधिष्ठात्रधिष्ठेययोरभेदचिंतनं । वरुणस्यार्चनमित्यत्र कुंभे इति शेषः । ततश्च कुंभे वरुणार्चनं कृत्वेत्यर्थः । कलशोपरि पूर्णपात्रे नक्षत्राधिपतेर्नक्षत्राकारप्रतिमायां अधिष्ठात्रधिष्ठेययोरैक्यध्यानेन नक्षत्रतद्देवतयोरर्चनं कार्यमिति यावत् । नक्षत्रादीनामाकाराः मंत्राश्च एकनक्षत्रजननशांतावुक्ताः । सर्वौषधीश्च रत्नानि मृत्त्वक्पल्लवसंयुतं । कुंभे प्रक्षि-

प्येति शेषः ॥ पूजांते समिदन्नाज्यैर्होमं तिलयवैस्तथा। ततः पूर्णाहुतिं हुत्वा वेदाध्यायिकुटुंबिने ॥ उत्तराप्रथमे पादे तिलपात्रं तथैव च। तिष्ये तु गां सवत्सां च सुशीलां च पयस्विनीं ॥ अजा चित्रासु वै दद्यात्पूर्वाषाढे तु कांचनं। यवांश्च व्रीहिमाषांश्च तिलमुद्गान्प्रदापयेत्। तिलपात्रादिदानानि उत्तरादिनक्षत्रशांत्यंगत्वेन दक्षिणारूपाणि। यवादीनि तिथ्यादिगंडांतशांत्यंगानि ॥ यथावित्तानुसारेण कुर्याद्ब्राह्मणभोजनं। पितुरायुष्यवृद्ध्यर्थं शांतिरत्र विधीयते॥ एवं यः कुरुते नूनं शांतिकर्म समाहितः। न दोषैर्लिप्यते नूनं पद्मपत्रमिवांभसेति ॥ पितुरित्यादिना शांतेरकरणे कर्तुर्दोषवत्त्वेन शांतिरावश्यकीति बोध्यते। इति ॥ ॥

अथनक्षत्रक्रमेणादौ सग्रहमखपुष्यनक्षत्रजननशांतिप्रयोग उच्यते ॥ तत उत्तराफल्गुनीनक्षत्रशांतिः। ततश्चित्राशांतिः। ततः पूर्वाषाढाशांतिः ॥ अथ पुष्यनक्षत्रजननशांतिप्रयोगः ॥ श्रीः ॥ पुष्यर्क्षस्य द्वितीयतृतीयचरणौ दुष्टौ। न प्रथमचतुर्थौ। तत्र पूर्वार्द्धे निषिद्धद्वितीयचरणे जन्मनि गंडांतशांतिवत्तात्कालिकं सवत्सगोदानं। उत्तरार्द्धे तृतीयचरणे तु न तात्कालिकं दानं। किंतु शांत्यंतरंगमेव। दुष्टयोरुक्तचरणयोर्गोमुखप्रसवपूर्विका उत्तरगार्ग्योक्ता शांतिः। प्रथमतुरीययोस्तुगोमुखप्रसवोऽधमजननिमित्तककेवलग्रहयज्ञ मात्रं। न शांतिः। पुष्यस्य द्वितीयचरणे जन्मनि। कर्ता स्नात्वा शिशुमुखमनवलोक्य नालच्छेदात्पूर्वं आचमनादिदेशकालसंकीर्तनांते। ममास्य शिशोः पुष्यनक्षत्रद्वितीयचरणजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सवत्सगोदानं करिष्ये। इति संकल्प्य। विधिना सवत्सां गां संपूज्य। प्रतिग्रहीतारं च संपूज्य। तस्मै सदक्षिणां तां गां दद्यात्। तदसंभवे। तन्मूल्यं। द्वात्रिंशत्कार्षापणान्वा ३२ ॥ ततः सूतकांते एकादशेऽहनि शुभदिने वा प्रथमं गोमुखप्रसवः। ततो ममास्य शिशोः। पुष्यर्क्षनिषिद्धचरणपूर्वार्द्धजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं उत्तरगार्ग्योक्तां सग्रहमखां पुष्यर्क्षशांतिं

करिष्ये । इति संकल्प्य । गणपतिपूजनादिअग्निप्रतिष्ठापनांतं । अग्नेः पूर्वतो वेद्यां । धान्यपुंजाष्टदले यथाविधिकलशं प्रतिष्ठापयेत् । पूर्णपात्रे । सौवर्ण्यां बाणाकारायां प्रतिमायां अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं तिष्यनक्षत्रदेवतां बृहस्पतिं तिष्यनक्षत्रं च प्रतिष्ठाप्य । अधिष्ठात्रधिष्ठेययोरैक्यसंचिंतनेनावाह्य ध्यात्वा च । ॐबृहस्पतेअ० चित्रम् । १ । ॐपुष्यमावाहयिष्यामि नक्षत्रं क्षिप्रसंज्ञकं । एहि पुष्यमहाभाग पोष्यं वर्द्धय सर्वतः । १ । इति मंत्राभ्यां । ॐबृहस्पतये तिष्याय नमः । इति षोडशोपचारैः संपूजयेत् ॥ पूजोपचारे वासोयुगलसमर्पणं । तदुत्तरतः ग्रहप्रतिष्ठापनं रुद्रकलशार्चनांतं ॥ ततो दक्षिणतो ब्रह्मासनास्तरणादि चरुं श्रपयित्वा । आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । होमद्रव्याणि । यज्ञियवृक्षसमिधः । चरुः । आज्यं । तिलाः । यवाश्चेति पंच । प्रतिद्रव्यमष्टोत्तरशतं १०८ होमसंख्या । होममंत्रः पूजोक्त एव । ॐबृहस्पतेअ० चित्रम् । पुष्यमावाहयिष्यामि० सर्वतःस्वाहा । इदं बृहस्पतये तिष्याय न मम । तत उत्तरपूजनादि अभिषेकांतं । कलशद्वयोदकेन मातापित्रोः शिशोश्चेति त्रयाणामभिषेकः । उत्तरार्द्धे जनने तु मातुः शिशोश्चेति द्वयोरभिषेकः । स्नानं । तिलकधारणं । आज्यावलोकनं तद्दानं च । शांत्यंगदक्षिणात्वेन सवत्सगोदानं । तन्मूल्यदानं वा । विसर्जनादिब्राह्मणभोजनांतं ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिककांडे उत्तरगार्ग्योक्तः सग्रहमखः पुष्यनक्षत्रजननशांतिप्रयोगः समाप्तः ॥

अथोत्तराफल्गुनीनक्षत्रजननशांतिप्रयोगः ॥ श्रीः ॥ उत्तराफल्गुन्योः प्रथमश्चरणो दुष्टः नेतरे । प्रथमचरणपूर्वार्द्धे जन्मनि पुष्यर्क्षशांतिवत्तात्कालिकं तिलपात्रदानं । प्रथमचरणोत्तरार्द्धे जन्मनि तु न तात्कालिकं दानं । किंतु शांत्यंतरंगमेव । शांतिस्तु पुष्यर्क्षशांतिवदुत्तरगार्ग्योक्तैव । आद्येतरचरणेषु गोमुखप्रसवोऽपि न । अंधभजननत्वात्केवलग्रहयज्ञः ॥ अथ प्रयोगः ॥ उत्तराफ-

ल्गुनीनक्षत्रनिषिद्धप्रथमचरणपूर्वार्द्धे जन्मनि। कर्ता स्नात्वा । शिशुमुखमनवलोक्य । नालच्छेदात्पूर्वं आचमनादिदेशकालसंकीर्तनांते ममास्य शिशोः उत्तराफल्गुनीनक्षत्रनिषिद्धप्रथमचरणपूर्वार्द्धजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं तिलपात्रदानं करिष्ये इति संकल्प्य। पूजनपूर्वकं विप्राय दद्यात् । ततः सूतकांते एकादशेऽहनि शुभदिने वा । आदौ गोमुखप्रसवः। ततः ममास्य शिशोः उत्तराफल्गुनीनक्षत्रनिषिद्धप्रथमचरणपूर्वार्द्धजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं उत्तरगार्ग्योक्तां सग्रहमखां उत्तराफल्गुनीनक्षत्रनिषिद्धप्रथमचरणजननशांतिं करिष्ये । इति संकल्प्य । गणपतिपूजनादि अग्निप्रतिष्ठापनांतं। अग्नेः पूर्वतो वेद्यां धान्यपुंजाष्टदले यथाविधि कलशं प्रतिष्ठाप्य । पूर्णपात्रे शय्याकारायां सौवर्णप्रतिमायां। अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं। उत्तराफल्गुनीनक्षत्रदेवतां भगं उत्तराफल्गुनीनक्षत्रं च प्रतिष्ठाप्य । अधिष्ठात्रधिष्ठेययोरैक्यसंचिंतनेनावाह्य ध्यात्वा च ॥ ॐ अर्यमणंबृहस्प० वाजिनं। १। ऋक्षमावाहयिष्यामि नक्षत्रं क्षिप्रसंज्ञकं। एहि त्वं सुभगे देवि ध्रुवे सर्वांगसुंदरे।१। इति मंत्राभ्यां। ॐ भगाय उत्तराफल्गुनीभ्यां नमः। इति षोडशोपचारैः संपूजयेत्। पूजोपचारे वासोयुग्मसमर्पणं। तदुत्तरतः। ग्रहप्रतिष्ठापनं रुद्रकलशप्रतिष्ठापनांतं। ततो दक्षिणतो ब्रह्मासनास्तरणादि चरुं श्रपयित्वा । आज्यभागांतं। द्रव्यत्यागः। ग्रहहोमः। प्रधानहोमः। होमद्रव्याणि । याज्ञियवृक्षसमिधः। आज्यं चरुः तिलाः यवाश्चेति पंच । प्रतिद्रव्यमष्टोत्तरशतं १०८ होमसंख्या। होममंत्रः पूजोक्तः। ॐ अर्यमणंबृ० वाजिनं ॥१॥ ऋक्षमावाहयिष्यामि नक्षत्रं क्षिप्रसंज्ञकं। एहि त्वं सुभगे देवि ध्रुवे सर्वांगसुंदरे स्वाहा। इदं भगाय उत्तराफल्गुनीभ्यां नमम। तत उत्तरपूजनाद्यभिषेकांतं। कलशद्वयोदकेन मातापित्रोः शिशोश्चेति त्रयाणामभिषेकः। उत्तरार्द्धे जनने तु मातुः शिशोश्चेति द्वयोरभिषेकः। स्नानं। तिलकधारणं। आज्यावलोकनं। तद्दानं

च । शांत्यंगदक्षिणात्वेन तिलपात्रदानं । विसर्जनादिब्राह्मणभोजनांतं ॥ इतिशुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिककांडे उत्तरगार्ग्योक्तः सग्रहमख उत्तराफल्गुनीनक्षत्रजननशांतिकप्रयोगः परिसमाप्तः ॥

अथ चित्रानक्षत्रजननशांतिप्रयोगः ॥ श्रीः ॥ चित्रायाः प्रथमद्वितीयचरणौ दुष्टौ । न तृतीयतुरीयौ । निषिद्धयोः प्रथमद्वितीययोः पूर्वार्द्धे प्रथमचरणे पुष्यर्क्षवत्तात्कालिकमजादानं । उत्तरार्द्धे द्वितीयचरणे जन्मनि तु न तात्कालिकं दानं किं तु शांत्यंतरंगमेव । शांतिस्तु पुष्यर्क्षशांतिवदुत्तरगार्ग्योक्तैव । तृतीयचतुर्थयोस्तु गोमुखप्रसवमात्रं ॥ चित्रोडुनिषिद्धपादपूर्वार्द्धजन्मनि । कर्ता स्नात्वा शिशुमुखमनवलोक्य नालच्छेदनात्पूर्वं आचमनादिदेशकालसंकीर्तनांते । ममास्य शिशोः चित्रोडुनिषिद्धचरणपूर्वार्द्धजननसूचितसर्वारिष्टनिरसनद्वारा श्रीप०र्थं अजाप्रदानं करिष्ये । इति संकल्प्य । यथाविधि मेषीं संपूज्य ॥ पूजनपूर्वकं विप्राय दद्यात् । तदसंभवे तन्मूल्यं वा ॥ ततः सूतकांते एकादशेऽहनि शुभे दिने वा । आदौ गोमुखप्रसवः । ततः । ममास्य शिशोः चित्रोडुनिषिद्धचरणपूर्वार्द्धजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपर०र्थं उत्तरगार्ग्योक्तां सग्रहमखां चित्रोडुजननशांतिं करिष्ये । इति संकल्प्य । गणपतिपूजनादिअग्निप्रतिष्ठापनांतं । अग्नेः पूर्वतो वेद्यां धान्यपुंजाष्टदलोपरि यथाविधि कलशं प्रतिष्ठाप्य । पूर्णपात्रे मौक्तिकाकारायां सौवर्णप्रतिमायां अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं नक्षत्रदेवतां त्वष्टारं चित्रोडु च प्रतिष्ठाप्य । अधिष्ठात्रधिष्ठ्ययोरभेदसंचिंतनेनावाह्य ध्यात्वा च । ॐ त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः । त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः ॥ १ ॥ चित्रामावाहयिष्यामि चित्ररूपां मनोहराम् । एहि मे वरदे चित्रे मृदुकर्मप्रसाधिनि ॥ २ ॥ इतिमंत्राभ्यां । ॐ त्वष्ट्रे चित्रोडुने नमः । इति षोडशोपचारैः संपूजयेत् । पूजोपचारे वासोयुगसमर्पणं । तदुत्तरतः ग्रहप्रतिष्ठापनं रुद्रकलशप्रति-

ष्ठापनांतं ॥ ततो दक्षिणतो ब्रह्मासनास्तरणादि चरुं श्रपयित्वा । आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । होमद्रव्याणि । यज्ञियवृक्षसमिधः । चरुः । आज्यं । तिलाः । यवाश्चेति पंच । प्रतिद्रव्यं अष्टोत्तरशतं १०८ होमसंख्या । होममंत्रः पूजोक्त एव । ॐ त्वष्टावीरंदेवकां० मिहर्यक्षिहोतः ॥ १ ॥ चित्रामावा० प्रसाधिनि स्वाहा । इदं त्वष्ट्रे चित्रोडुने नमम । तत उत्तरपूजनाद्यभिषेकांतं । कलशद्वयोदकेन मातापित्रोः शिशोश्चेति त्रयाणामभिषेकः । उत्तरार्द्धे जनने तु । मातुः शिशोश्चेति द्वयोरभिषेकः । स्नानं तिलकधारणं । आज्यावलोकनं तद्दानं च । शांत्यंगदक्षिणात्वेन अजाप्रदानं । तन्मूल्यं वा ॥ विसर्जनादिब्राह्मणभोजनांतं ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिकांडे उत्तरगार्ग्योक्तः सग्रहमखश्चित्रोडुजननशांतिप्रयोगः ॥

अथ मानवीयसंहितायां प्रयोगपारिजाते च चित्रोडुजननशांतिविधिः ॥ श्रीः ॥ चित्रानक्षत्रजातानामरिष्टं च पदक्रमात् । पितुश्च मातुश्च पितामहस्य च धनस्य च । अगस्त्यः ॥ त्वाष्ट्रे च पुष्ये च तथा च तोये कन्याकुलीरोदयचापलग्ने । शुभग्रहः पश्यति चेन्न हन्यात्पितॄंश्च मातॄंश्च सुतं च मातुलं इति ॥ तद्दोषपरिहारार्थं शांतिं वक्ष्यामि नारद । गोमुखप्रसवं कुर्याद्ग्रहशांतिमतःपरं ॥ सर्वारिष्टनिवृत्त्यर्थं दशदानं यथाविधि । गृहस्यैशानदिग्भागे दशधान्यं च निक्षिपेत् ॥ कुंभस्य स्थापनं कुर्याद्वस्त्रेण परिवेष्टयेत् । गृहस्यैशानदिग्भागे मंडपं कारयेत्ततः ॥ चतुर्द्वारसमायुक्तं चित्रध्वजपताककं । गोमयेनोपलिप्याथ स्थंडिलं परिकल्पयेत् ॥ संकल्पं च ततः कृत्वा प्राणायामपुरःसरं । आचार्यं वरयेदादौ श्रोत्रियं वेदपारगं ॥ ऋत्विजो वरयेत्पश्चाच्छ्रोत्रियांश्च कुटुंबिनः । पुण्याहवाचनं कृत्वा कुंभं संस्थाप्य यत्नतः ॥ सुवर्णप्रतिमां स्थाप्य रत्नौषधिमृदादिकं । प्रधान-

कुंभ आवाह्य चित्रानक्षत्रदेवतां ॥ दक्षिणोत्तरपार्श्वे तु अधिप्रत्यधिदेवते । कुंभस्य दक्षिणे पार्श्वे उपकुंभं प्रपूजयेत् ॥ पूर्वोक्तेनैव मार्गेण पूजां कृत्वा यथाविधि। आचार्येणैव कर्तव्यं जपहोमादिकं तथा ॥ प्रधानकुंभे नक्षत्रदेवतावाक्यकाष्टकं । सहस्रवारं जप्यैव शतमष्टोत्तरं तु वा॥ ऋत्विजो जपकर्तारः स्पृशंतश्चोपकुंभकं । त्वष्टाहतपुत्रमंत्रं त्वष्टेदं चापि मंत्रकं ॥ दिक्पालरुद्रसूक्तं च श्रीसूक्तं च स्पृशन् जपेत् । कुंभस्य पश्चिमे देशे होमं कुर्याद्यथाविधि ॥ कर्तुः सूत्रोक्तमार्गेण आज्यभागांतमाचरेत् । समिधः पायसं चाज्यमष्टवाक्यैः शतं हुनेत् ॥ जपमंत्रादिकैर्हुत्वा नक्षत्रे सर्वमेव हि । जपादिपरिषेकांतं कृत्वा कर्म समापयेत् । मातापित्रोः शिशोश्चापि निरीक्षेदाज्यपात्रकं । एवं कृते न संदेहः सर्वारिष्टं प्रशाम्यति ॥ इति मानवसंहितायां प्रयोगपारिजाते च चित्रोडुजननशांतिः ॥

अथांधनक्षत्रजननशांतिः ॥ श्रीः ॥ सा च केवलो ग्रहयज्ञः । वसिष्ठः ॥ कुलनाशोऽधभे भवेदिति । तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूरचेतसामिति च । अथांधनक्षत्रलक्षणं । श्रीपतिः ॥ अंधभं तदनु मंदलोचनं मध्यलोचनमतः सुलोचनं । रोहिणीप्रभृतिभिश्चतुर्विधं साभिजिच्च गणयेत्पुनः पुनरीति । पित्राद्यरिष्टाभावान्न गोमुखप्रसवः । तत्र विवेकः ।

| | | | | |
|---|---|---|---|---|
| १ रोहिणी | १ मृगशीर्ष | १ आर्द्रा | १ पुनर्वसु | पुष्ये तु द्वितीयतृतीयपादयोर्गो- |
| २ पुष्यम् | २ आश्लेषा | २ मघा | २ पूर्वाफाल्गुनी | मुखप्रसवः गार्ग्योक्ता शांतिश्च । |
| ३ उत्तराफल्गुनी | ३ हस्तः | ३ चित्रा | ३ स्वाती | प्रथमचतुर्थयोर्गोमुखप्रसवः । |

| | | | |
|---|---|---|---|
| ४ विशाखा | ४ अनूराधा | ४ ज्येष्ठा | ४ मूलं |
| ५ पूर्वाषाढा | ५ उत्तराषाढा | ५ अभिजित्[1] | ५ श्रवणं |
| ६ धनिष्ठा | ६ शततारका | ६ पूर्वाभाद्रपदा | ६ उत्तराभाद्रपदा |
| ७ रेवती | ७ अश्विनी | ७ भरणी | ७ कृत्तिका |
| । इति सप्तनक्षत्राणि । | इति सप्तनक्षत्राणि । | इति सप्तनक्ष० । | इति सप्तनक्षत्राणि । |
| । अंधलोचनानि । | । मंदलोचनानि । | मध्यलोचनानि । | सुलोचनानि । |
| ७ | ७ | ७ | ७ |

केवलो ग्रहयज्ञश्च । उत्तराफल्गुन्योः प्रथमे पादे गोमुखप्रसवः गार्ग्योक्ता शांतिश्च द्वितीयतृतीयचतुर्थेषु केवलो ग्रहयज्ञः । पूर्वाषाढायास्तृतीयपादे गोमुखप्रसवः गार्ग्योक्ता शांतिश्च प्रथमद्वितीयचतुर्थपादेषु केवलो ग्रहयज्ञः।

रेवत्याः अंत्यघटीद्वयं वर्जयित्वा सर्वत्र भागेषु केवलो ग्रहयज्ञः । अंत्यघटीद्वये तु गोमुखप्रसवः नक्षत्रगंडांतशांतिश्च । अथ विशाखानक्षत्रजनने दुष्टफलविशेषः । तथाच वसिष्ठः । द्विदैवताराजनिता देवरमिति । हन्तीति शेषः । नृसिंहप्रसादे ॥ द्विदैवजा देवरमाशु हन्याद्भार्यानुजामाशु निहंति सूनुः । तथा भार्या स्वसारं वा शालकं वा द्विदैवजः । कन्यका देवरं हंति विशाखांत्यसमुद्भवा । आद्यपादत्रये नैव आद्यभे तु पुमान् भवेत् । न हन्याद्देवरं कन्या तुलामिश्रा द्विदैवजा । तद-

१ अभिजिल्लक्षणं खगोलज्ञाने । वैश्वांत्यपादः श्रुत्याद्यस्तिथ्यंशश्चाभिजिद्भवेदिति । वैश्वं=विश्वेदेवदेवताकं उत्तराषाढोडु । तस्यांत्यश्चरणः पंचदशघटिकः । श्रुतिः श्रवणं । तस्याद्यश्चरणः पंचदशघटिकः । एवं त्रिंशद्घटिकमभिजिदुडु भवति ॥

क्षांतोद्भवा वर्ज्या दुष्टा वृश्चिकपुच्छवदिति । द्विदैवं विशाखा । तच्चतुर्थपादे जाता कन्या पत्यनुजं देवरं हंति । अतः सा वृश्चिकपुच्छवद्दुष्टा वर्ज्या । आद्यपादत्रये नैतत्फलं । तथा चतुर्थपादे जातः पुत्रः भार्यानुजां स्वसारं शालकं वा हंति । आद्यभे तु पुमान् भवेदिति । तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूरचेतसामिति वसिष्ठेन सर्वशेषत्वोक्तेर्ग्रहयज्ञः कार्यः । यत्र काले दुष्टफलमात्रमुक्तं शांतिर्नोक्ता तत्र ग्रहमखः कार्य इति कमलाकरोक्तेरिति धर्मसिंधुश्च । इति विशाखानक्षत्रजननशांतिः । रोहिणीधनिष्ठयोर्गोमुखप्रसवो न । केवलो ग्रहयज्ञः । इति रोहिणीधनिष्ठानक्षत्रजननशांतिः ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिकांडे रोहिणी १ पुष्य २ उत्तराफल्गुनी ३ विशाखा ४ पूर्वाषाढा ५ धनिष्ठा ६ रेवती ७ तिसप्तांधनक्षत्रजननशांतिः समाप्ता ॥

अथ रेवतीमघानक्षत्रजननशांतिः ॥ श्रीः ॥ तत्र रेवत्यंशे धर्मसिंधुकारेण यदुक्तं रेवत्यंतघटीद्वये नक्षत्रगंडांतशांतिगोप्रसवग्रहमखाः कार्याः इत्येतत्समूलं । एतदग्रे यदुक्तं रेवत्या इतरभागेषु दोषविशेषानुक्तेर्न शांत्यादिकमिति । तन्न समूलं । तथाच वसिष्ठः ॥ पुष्ये कर्काटके चापे जलर्क्षे पितृमृत्युके । पुत्रो जातो यदि भवेन्मातरं स जिघांसतीति । पितृमृत्युके । पितरि मघायां । मृत्युके भरण्यां च जातः शिशुः मातरं जिघांसति इति तदर्थः । तथा मघायां । मघाप्रथमपादजनने मूलवत्फलं । तत्र गोप्रसवनक्षत्रेशपूजनग्रहमखाः कार्याः । मघाया आद्यघटीद्वये जनने नक्षत्रगंडांतशांतिरपि । मघांतिमपादत्रये च दोषविशेषानुक्तेर्न शांत्यादिकमिति धर्मसिंधुः । तत्र प्रथमपादे मूलवत्फलं १ नक्षत्रेशपूजनं २

अंतिमपादत्रये दोषविशेषानुक्तेर्न शांत्यादिक ३ मिति त्र्यंशा असंगताः। पूर्वोक्तवासिष्ठवचनात्सर्वत्र मघायां मात्रारिष्ट-दोषोक्तेः। सर्वशेषत्वेन केवलग्रहमखस्यैव प्राप्तेर्नक्षत्रेशपूजनानुक्तेश्च। तथाच रेवत्यां मघायां च सर्वत्र मात्रारिष्टत्वा-त्प्रथमं गोमुखप्रसवः। सर्वशेषत्वात्केवलो ग्रहयज्ञश्च कार्यः। रेवत्यंतघटीद्वये मघाया आद्यघटीद्वये च गोमुखप्रसवपूर्विका सग्रहमखा नक्षत्रगंडांतशांतिः कार्या ॥ इति रेवतीमघानक्षत्रजननशांतिः ॥

अथाश्विनीनक्षत्रजननशांतिः ॥ श्रीः ॥ अश्विन्यां जनने सर्वत्र दोषाभावः। तदनुक्तेः। तथापि। पौष्णाश्विन्योर्गुरौ सार्प-मघाचित्रैंद्रमूलभे। एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथेति गर्गवचनात्केवलं गोमुखप्रसवः कार्यः। दोषानुक्तेर्न ग्रहमखः। इत्यश्विनीनक्षत्रजननशांतिः ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिककांडे अंधलोचनविशाखारेवतीमघाअश्वि-नीनक्षत्रजननशांतयः ॥

अथपूर्वाषाढानक्षत्रजननशांतिः ॥ श्रीः ॥ पूर्वाषाढाभस्य तृतीयश्चरणो दुष्टः। न प्रथमद्वितीयतुरीयाः। निषि-द्धतृतीयचरणपूर्वार्द्धे जन्मनि पुष्यर्क्षवत् तात्कालिकं सुवर्णदानं। तृतीयचरणोत्तरार्द्धे जन्मनि तु न तात्कालिकं दानं किंतु शांत्यंतरंगमेव। शांतिस्तु पुष्यर्क्षवदुत्तरगार्ग्योक्तैव। इतरचरणेषु गोमुखप्रसवो न। अनुक्तेः। अंधभजननत्वात्केवलो ग्रहयज्ञः। अथप्रयोगः ॥ पूर्वाषाढाभनिषिद्धतृतीयचरणपूर्वार्द्धे। कर्ता स्नात्वा शिशुमुखमनवलोक्य नालच्छेदनात्पूर्वं आचमनादिदेशकालसंकीर्तनांते। ममास्य शिशोः पूर्वाषाढाभनिषिद्धतृतीयचरणपूर्वार्द्धजननसूचितसर्वारिष्टनिरसनद्वारा

श्रीप०र्थं सुवर्णदानं करिष्ये । इति संकल्प्य । यथाविधि सुवर्णं संपूज्य विप्रपूजनपूर्वकं दद्यात् । तदसंभवे तन्मूल्यं वा । ततः सूतकांते एकादशेऽहनि शुभे दिने वा । प्रथमं गोमुखप्रसवः । ततः । ममास्य शिशोः पूर्वाषाढाभनिषिद्धतृतीयचरणपूर्वार्धजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपर०र्थं उत्तरगार्ग्योक्तां सग्रहमखां पूर्वाषाढाभजननशांतिं करिष्ये । इति संकल्प्य । गणपतिपूजनादि अग्निप्रतिष्ठापनांतं । अग्नेः पूर्वतो वेद्यां धान्यपुंजाष्टदले यथाविधि कलशं प्रतिष्ठाप्य । पूर्णपात्रे गजदंतसदृशाकारायां सौवर्णप्रतिमायां अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं नक्षत्रदेवतां अपः पूर्वाषाढाभं च प्रतिष्ठाप्य । अधिष्ठात्रधिष्ठेययोरभेदाचिंतनेनावाह्य ध्यात्वा च ॥ ॐ आपोहिष्ठाम० चक्षसे ॥ १ ॥ ऋक्षमावाहयिष्यामि पूर्वाषाढेति संज्ञकं । एहि त्वमुग्रे वरदे आषाढे पूर्वपूर्वके ॥ २ ॥ इति मंत्राभ्यां । ॐ अद्भ्यः पूर्वाषाढाभ्यो नमः । इति षोडशोपचारैः संपूजयेत् । पूजोपचारे वासोयुगसमर्पणं । तदुत्तरतः । ग्रहप्रतिष्ठापनं रुद्रकलशप्रतिष्ठापनांतं । ततो दक्षिणतो ब्रह्मासनास्तरणादि । चरुं श्रपयित्वा । आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । होमद्रव्याणि । यज्ञियवृक्षसमिधः । आज्यं । चरुः । तिलाः । यवाश्चेति पंच । प्रतिद्रव्यमष्टोत्तरशतं १०८ होमसंख्या । होममंत्रः पूजोक्तः ॥ ॐ आपोहिष्ठाम० चक्षसे ॥ १ ॥ ऋक्षमावा० पूर्वपूर्वके स्वाहा । इदमद्भ्यः पूर्वाषाढाभ्यो नमम । तत उत्तरपूजनादि कलशद्वयोदकेनाभिषेकांतं । मातापित्रोः शिशोश्चेति त्रयाणामभिषेकः । उत्तरार्द्धे जनने तु मातुः शिशोश्चेति द्वयोरेवाभिषेकः । स्नानं

तिलकधारणं । आज्यावलोकनं तद्दानं च । शांत्यंगदक्षिणात्वेन तिलपात्रदानं । विसर्जनादिब्राह्मणभोजनांतं ॥ इति शुक्लयजुर्वेदीयकर्मकांडप्रदीपे जननशांतिककांडे पूर्वाषाढानक्षत्रजननशांतिप्रयोगः ॥

अथैकनक्षत्रजननशांतिः ॥श्रीः॥ तत्रैकनक्षत्रलक्षणं शतपथश्रुतौ "एकनक्षत्रे एकनक्षत्रꣳहि पितृणाममावास्यायाममावास्या वा एकनक्षत्रमेकोहि" इति । १३।८।१।३ । अत्र सर्वविद्यानिधानकवींद्राचार्यधर्माध्यक्षश्रीहरिस्वामिनां भाष्यं "एकनक्षत्रे । एकंच नक्षत्रं—एकनक्षत्रं । पुष्यः स्वाती हस्त इत्यादि । यत्तु द्विवचनबहुवचानान्तशब्दादिवाक्यप्रसिद्धं पुनर्वसू, विशाखे, कृत्तिकाः, भरण्यः, अनूराधाः, इत्यादि, तदनेकनक्षत्रं । कथं पुनरमावास्या एकनक्षत्रमित्यत आह एकोहीति । मासे एका अमावास्या भवति । न यथा प्रतिपदौ द्वितीये इत्याद्याः । अथवा । एका हि सा उभयोरपि चन्द्रार्कयोरायतनं । ग्रहायतनत्वसामान्यादेव नक्षत्रमित्युच्यते" इति । महर्षिः कात्यायनोऽपि "एकनक्षत्रे अमावास्यायां वा" इति । का. श्रौ. सू. २१ । ३ । ३ । ४ । अत्र कर्कोपाध्यायाः "एकनक्षत्रे । एकनक्षत्रꣳहि पितृणामिति । एकनक्षत्रं च यत्रैका तारका । चित्रास्वातीरेवतीत्यादिर्यथा । अमावास्यायां वेति सामर्थ्याद्द्रष्टव्यं । समुच्चयः कस्मान्न भवति । एकनक्षत्रे अमावास्यायां च । नैतदेवं । अमावास्यायामेकनक्षत्रसंस्तवश्रवणात् । अमावास्या वा एकनक्षत्रमिति । तच्च समुच्चये न संभवति" इति । ततश्चैतानि एकनक्षत्राणि—रोहिणी १ मृगशीर्षं २ आर्द्रा ३ पुष्यः ४ हस्तः ५ चित्रा ६ स्वाती ७ ज्येष्ठा ८ मूलं ९ अभिजित् १० श्रवणं ११ शतभिषक् १२ रेवती १३ अमावास्या १४ इति चतुर्दश ॥ एषु जनने फलमाह देवकीर्तिः ।

यद्येकस्मिन्धिष्ण्ये जायंते दुहितरोऽथवा पुत्राः। पितुरंतकरा ह्येते यद्यपरे प्रीतिरतुला स्यात्। इति। पितुरिति मातुरुप-लक्षणं। पित्रोस्तु जन्मकर्मर्क्षे जातस्तु पितृमातृहा इति वसिष्ठवचसः स्वरसात्। अपरे अनेकनक्षत्रे यदि जननं तदा अतुला-प्रीतिः फलमिति तदर्थः। पित्रोरिव सोदरयोर्भ्रात्रोर्भगिन्योर्भ्रातृभगिन्योश्चानिष्टं। तथाह गार्ग्यः—एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः। प्रसूतिश्च तयोर्मृत्युर्भवेदेकस्य निश्चयः। इति। भ्रात्रोः भ्राता च भ्राता च भ्रातरौ। 'सरूपाणामेकशेष एकविभक्तौ' इति सरूपैकशेषः। भ्राता च स्वसा च भ्रातरौ। 'भ्रातृपुत्रौ स्वसृदुहितृभ्यां' इति विरूपैकशेषः मध्यमपदलोपी असमर्थसमास-श्छान्दसः। तेन सोदरयोर्भ्रात्रोः सोदरयोर्भ्रातृभगिन्योश्चेत्यर्थः। तथा पितृपुत्रयोरित्यत्र 'माता च पिता च पितरौ पुत्रश्च पुत्री-च पुत्रौ' इति विरूपैकशेषौ। तेन मातापित्रोः पुत्रपुत्र्योश्चेत्यर्थः। नैतत्साधारणतो जनने अनिष्टकरं। अपितु पितुर्मातुः सोदरयोर्भ्रात्रोः सोदरयोर्भगिन्योः सोदरयोर्भ्रातृभगिन्योश्च समाने एकनक्षत्रे जनने अनिष्टं नान्यथा। समानभे यदा देवि पितापुत्रौ च सोदरौ॥ भगिन्यौ वा स्वबन्धू वा तदा पूर्वस्य नाशनमिति ज्योतिर्निबंधोक्तेः। मातापित्रोः समानैकनक्षत्रजनने गोमुखप्रसवः नान्यत्र। अत्रेदं ध्येयं। यथा अमावास्या तिथ्यन्तर्भूता तिथिवाच्या इत्युत्सर्गसिद्धं तथा सा उक्तश्रुति-बलादेकनक्षत्रांतर्भूता सत्येकनक्षत्रवाच्याऽपीति। अस्या उभयविधत्वेन यदेयममावास्या एकनक्षत्रलक्षणाक्रांता जायेत तदा तस्यामेकनक्षत्रजननशांतिर्दर्शादिशांतिश्चेति शांतिद्वयं। तच्च शांतिद्वयानुष्ठानं कालफलसंज्ञादेवतादिभेदात्पृथक्पृथक् कार्यं। तंत्रं न भवतीत्यर्थः॥ शांतिकालः॥ तत्र शांतिं प्रवक्ष्यामि सर्वाचार्यमतेन तु। शुभर्क्षे शुभवारे च चंद्रताराबलान्विते।

रिक्ताविष्टिविवर्ज्यें तु प्रारभेद्दिवसे सुधीः। एतेनैकादशाहकालनियमो नात्र ॥ शांतिकविधिः ॥ आचार्यं वरयेत्पूर्वं चतुरोऽथ द्विजोत्तमान् । पुण्याहं वाचयित्वा तु शांतिकर्म समाचरेत् ॥ अग्नेरीशानदिग्भागे नक्षत्रप्रतिमां ततः । तत्तद्दक्षोक्तमंत्रेण पूजयेत्कलशोपरि ॥ कातीयानां नक्षत्रमंत्राः वसिष्ठप्रोक्तकात्यायनपरिशिष्टोपात्ताः । परं तत्परिशिष्टं नोपलब्धं अतः सर्वेषां साधारणा विष्णुधर्मोत्तरोक्ता नक्षत्रमंत्रा उच्यंते ॥ ऋक्षमावाहयिष्यामि क्षिप्रमश्विनिसंज्ञकं । एह्यश्विनि महाभागे वरदे कामदायिनि ।१। ऋक्षमावाहयिष्यामि उग्रं भरणिसंज्ञकं । एहि त्वं देवि भरणि सुभगे चारुदर्शने । २ । आवाहयिष्यामि शुभां कृत्तिकां देवपूजितां । एहि साधारणे देवि ज्येष्ठे दक्षसुते शुभे । ३ । आवाहयामि वरदां रोहिणीं चंद्रवल्लभां । एहि रोहिणि धर्मज्ञे ध्रुवकर्मसु शोभने । ४ । आवाहयामि वरदामिल्वकां शशिवल्लभां । एहि मे इल्वके देवि मृदुकर्मसु शोभने ।५। आर्द्रामावाहयिष्यामि नक्षत्रं बाहुसंज्ञकं । एह्यार्द्रे चारुसर्वांगि वारुणे रुद्रसंमते। ६। ऋक्षमावाहयिष्यासि धर्मज्ञं तु पुनर्वसुं । पुनर्वसो इहागच्छ चरकर्मप्रसाधक । ७ । पुष्यमावाहयिष्यामि नक्षत्रं क्षिप्रसंज्ञकं। एहि पुष्य महाभाग पोष्यं वर्द्धय सर्वतः । ८। आवाहयिष्याम्याश्लेषां भक्तानां श्रीविवर्द्धिनीं । आश्लेषे त्वमिहैह्येहि दारुणे विजयप्रदे । ९ । मघामावाहयिष्यामि उग्रनक्षत्रमंजसा । एहि मे सुभगे देवि सर्वाघविनिसूदनि । १० । भगमावाहयिष्यामि पूर्वाफल्गुनिसंज्ञकं । एहि भाग्य महाभाग उग्रकर्मप्रसाधक । ११ । ऋक्षमावाहयिष्यामि नक्षत्रं क्षिप्रसंज्ञकं । एहि त्वं सुभगे देवि ध्रुवे सर्वांगसुंदरे । १२ । हस्तमावाहयिष्यामि सावित्रं क्षिप्रमंजसा । एहि सावित्र धर्मज्ञ भक्तानां पापनाशन

। १३ । चित्रामावाहयिष्यामि चित्ररूपां मनोहरां । एहि मे वरदे चित्रे मृदुकर्मप्रसाधनि । १४ । स्वातीमावाहयिष्यामि नित्यमुत्तरमार्गगां । देवि स्वाति त्वमभ्येहि वरकर्मसु शोभने । १५ । ऋक्षमावाहयिष्यामि विशाखां दीप्ततेजसं । विशाखे त्वमिहाभ्येहि देवि साधारणे शुभे । १६ । ऋक्षमावाहयिष्यामि अनूराधां वरप्रदां । अनूराधे त्वमभ्येहि मृदुकर्मसु शोभने । १७ । ज्येष्ठामावाहयिष्यामि नक्षत्रं शक्रदैवतं । ज्येष्ठे देवि त्वमभ्येहि दारुणे चारुलोचने । १८ । मूलमावाहयिष्यामि नक्षत्रं दारुणं महत् । एहि मूल महाभाग भक्तानामभयप्रद । १९ । ऋक्षमावाहयिष्यामि पूर्वाषाढेतिसंज्ञकं । एहि त्वमुग्रे वरदे आषाढे पूर्वपूर्वके । २० । ऋक्षमावाहयिष्यामि उत्तराषाढसंज्ञकं । उत्तरे त्वं समभ्येहि आषाढे ध्रुवसाधिके । २१ । ऋक्षमावाहयिष्यामि यत्तदभिजिदुच्यते । एहि धिष्ण्यवरिष्ठाद्य क्षिप्रकर्मप्रसाधक । २२ । ऋक्षमावाहयिष्यामि श्रवणं सर्वकामदं । अश्वत्थ त्वं समभ्येहि चरकर्मप्रसाधक । २३ । धनिष्ठामावाहयिष्यामि नक्षत्रं शशिवल्लभं । धनिष्ठे त्वमिहाभ्येहि चरकर्मप्रसाधिके । २४ । ऋक्षमावाहयिष्यामि नाम्ना शतभिषं शुभां । आगच्छ त्वं शतभिषे चरकर्मसु शोभने । २५ । ऋक्षमावाहयिष्यामि पूर्वाभाद्रपदं महत् । एहि भाद्रपदे पूर्वे उग्रकर्मप्रसाधिके । २६ । ध्रुवमावाहयिष्यामि देशे भाद्रपदोत्तरं । एहि त्वं सुमहाभागे मम भाद्रपदोत्तरे । २७ । ऋक्षमावाहयिष्यामि रेवतीं चारुदर्शनां । एहि रेवति धर्मज्ञे मृदुकर्मप्रसाधिनि । २८ । इति विष्णुधर्मोत्तरोक्ता नक्षत्रमंत्राः सर्वेषां साधारणाः ॥ अथ कातीयानां स्वशाखीया वैदिका नक्षत्रदेवतामंत्राः ।

१ ॐ आवाकृष्णे० ७।११।
२ ॐ अपेतोयंतु० ३५। १।
३ ॐ अग्निंदूतं० २२।१७।
४ ॐ सत्तेपवित्रं० १९।४१।
५ ॐ आप्यायस्व० १२।११२।
६ ॐ नमःशंभवा० १६।४१।
७ ॐ अदितिर्द्यौ० २५।२३।
८ ॐ बृहस्पतेअ० २६। ३।
९ ॐ नमोस्तुस० १३। ६।
१० ॐ आयंतुनःपि० १९।५८।
११ ॐ भगएवभग० ३४।३८।
१२ ॐ अर्यमणंबृह० ९।२७।
१३ ॐ उदुत्यंजात० ७।४१।
१४ ॐ त्वष्टावीरंदेव० २९। ९।
१५ ॐ सनःपितेव० ३।२४।
१६ ॐ इंद्राग्नीआग० ७।३१।
१७ ॐ मित्रस्यचर्ष० ११।६२।
१८ ॐ इंद्रआसान्नेता० १७।४०।
१९ ॐ असुन्वंतम० १२।६२।
२० ॐ आपोहिष्ठाम० ११।५०।
२१ ॐ विश्वेदेवास० ७।३४।
२२ ॐ यत्तेपवित्रम० १९।४१।
२३ ॐ इदंविष्णुर्वि० ५।१५।
२४ ॐ सुगावोदेवाःस० ७।१८।
२५ ॐ इमम्मेवरुण० २१। १।
२६ ॐ उतनोहिर्बुध्न्यःश्रृ० ३४।५३।
२७ ॐ उतनोहिर्बुध्न्यःश्रृ० ३४।५३
२८ ॐ पूषन्तवव्रतेव० ३४।४१।

इति कातीयानां स्वशाखीया वैदिका नक्षत्रदेवतामंत्राः ॥

॥ अथ वसिष्ठसंहितोक्ता वैदिका नक्षत्रदेवतामंत्राः ॥ अध्यायः ॥ ४६ ॥ अथाश्वलायनानां नक्षत्रहोमे शौनकोक्ता वैदिका नक्षत्रदेवतामंत्राः ॥

१ ॐ देवस्यत्वास०
२ ॐ त्र्यंबकंयजा०
३ ॐ पुनंतुमादेव०
४ ॐ नमोब्रह्मणेन०
५ ॐ नवोनवोभ०
६ ॐ नमःशंभवाय०
७ ॐ अदितिर्द्यौर०
८ ॐ बृहस्पतेअति०
९ ॐ नमोस्तुसर्पे०
१० ॐ आयंतुनःपि०
११ ॐ भगएवभग०
१२ ॐ अर्यमायाति०
१३ ॐ उदुत्यंजात०

१५ ॐ सनःपितेव०
१६ ॐ इंद्राग्नीआ०
१७ ॐ मित्रस्यच०
१८ ॐ इंद्रस्वोनि०
१९ ॐ मोषूणइंद्रा०
२० ॐ आप्यायस्व०
२१ ॐ विश्वेदेवास०
२२ ॐ ब्रह्मजज्ञानं
२३ ॐ अतोदेवाअ०
२४ ॐ त्रायंताम्०
२५ ॐ इमम्मेव०
२६ ॐ शमग्निः०
२७ ॐ नमस्तेरु०

१ ॐ अश्विनावेह०
२ ॐ यमायसोमं०
३ ॐ अग्निर्मूर्द्धा०
४ ॐ प्रजापते०
५ ॐ आप्यायस्व०
६ ॐ कद्रुद्राय०
७ ॐ अदितिर्द्यौ०
८ ॐ बृहस्पतेअ०
९ ॐ आयंगौ०
१० ॐ आहंपितॄन्०
११ ॐ शन्नोभगः०
१२ ॐ अनृक्षराम०
१३ ॐ सवितापश्चा०

१५ ॐ वायवायाहि०
१६ ॐ इंद्राग्नीरो०
१७ ॐ मित्रोजनान्०
१८ ॐ इंद्रमित्०
१९ ॐ मोषूणं०
२० ॐ आपोअस्मान्०
२१ ॐ विश्वेदेवाऋता०
२२ ॐ ब्रह्मजज्ञानं
२३ ॐ इदंविष्णुर्विच०
२४ ॐ ज्मयाअत्र०
२५ ॐ इमम्मेवरु०
२६ ॐ शन्नोअजएक०
२७ ॐ उतनोनक्त०

१४ ॐ चित्रंदेवाना० २८ ॐ हृ(?)सःशु० १४ ॐ तन्नस्तुरीपं० २८ ॐ संपूपन्नव्वं०

(इति वसिष्ठसंहितोक्ता वै. न. दे. मंत्राः॥ अध्याय:४६) ॥इत्याश्वलायनानां नक्षत्रहोमे शौनकोक्ताः वैदिका नक्षत्रदेवतामंत्राः॥

अथ तैत्तिरीयाणां वैदिकाः नक्षत्रमंत्राः। नक्षत्रदेवतामंत्राश्च। ते नक्षत्रप्रपाठकोक्ता अष्टवाक्यात्मकाः। इमे मंत्राः देवभद्रकृते नक्षत्रसत्रे याज्यापुरोनुवाक्याः॥

| नक्षत्रानुक्रमांकः | याज्यात्वदर्शकोऽङ्कः | पुरोनुवाक्यात्वदर्श० | | नक्षत्रानुक्रमांकः | याज्यात्वदर्शकोऽङ्कः | पुरोनुवाक्यात्वदर्शकोऽङ्कः | |
|---|---|---|---|---|---|---|---|
| | | | | १४ | त्वष्टानक्षत्रमभ्यैति० १ | तन्नस्त्वष्टातदुचित्रा० | २ |
| १ | तदश्विनावश्वयुजोप० १ | योदेवानांभिषजौ० | २ | १५ | वायुर्नक्षत्रमभ्यैति० १ | तन्नोवायुस्तदुनिष्ट्या० | २ |
| २ | अपपाप्मानंभरणी० १ | यस्मिन्नक्षत्रेयमए० | २ | १६ | दूरमस्मच्छत्रवोयंतु० १ | नक्षत्राणामधिपत्नी० | २ |
| ३ | अग्निर्नः पातुकृत्तिका०१ | यस्यभांतिरश्मयो० | २ | १७ | ऋध्यास्महव्यैर्नमसो०१ | चित्रन्नक्षत्रमुदगात्पुर० | २ |
| ४ | प्रजापतेरोहिणीवै० १ | रोहिणीदेव्युदगा० | २ | १८ | इंद्रोज्येष्ठानामनुनक्ष०१ | पुरंदरायवृषभायधृ० | २ |
| ५ | सोमोराजामृगशीर्षे० १ | यत्तेनक्षत्रंमृगशी० | २ | १९ | मूलंप्रजांवीरवतींविदे०१ | अहन्नोअद्यसुविते० | २ |
| ६ | आर्द्रयारुद्रः प्रथ० १ | हेतीरुद्रस्यपरिव्या० | २ | २० | यादिव्याआपः पयसा०१ | याश्चकूप्यायाश्चना० | २ |
| ७ | पुनर्नोदेव्यदितिस्पृ० १ | एवानदेव्यदितिर० | २ | २१ | तन्नोविश्वेउपशृण्वंतु०१ | शुभ्राः कन्यायुवतयः सु० | २ |
| ८ | बृहस्पतिः प्रथमंजा० १ | तिष्यः पुरस्तादुतम० | २ | २२ | यस्मिन्ब्रह्माभ्यजयत्स०१ | उभौलोकौब्रह्मणासं० | २ |
| ९ | इदंसर्पेभ्योहविर० १ | येरोचनेसूर्यस्या० | २ | २३ | शृण्वंतिश्रोणाममृत०१ | त्रेधाविष्णुरुरुगायो० | २ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १० | उपहूताःपितरोयेम० | १ | येअग्निदग्धायेनग्नि०२ | २४ | अष्टौदेवावसवःसो० | १ | यज्ञन्नःपांतुवसवःपु० २ |
| ११ | गवांपतिःफल्गुनीना० | १ | येनेमाविश्वाभुवनानि०२ | २५ | क्षत्रस्यराजावरुणो० | १ | जायज्ञन्नोरा० २ |
| १२ | श्रेष्ठौदेवानांभगवो० | १ | भगोहदाताभगइत्प्र०२ | २६ | अजएकपादुदगा० | १ | बिभ्राजमानःसमिधा० २ |
| १३ | आयांतुदेवःसवितोप० | १ | हस्तप्रयच्छत्वमृतंव०२ | २७ | अहिर्बुध्नियःप्रथमा० | १ | चत्वारएकमभिकर्म० २ |
| | | | | २८ | पूषारेवत्यन्वेति० | १ | क्षुद्रान्पशून्रक्षतुरेवती० २ |

| अथनक्षत्राणि । | अथनक्षत्रदेवताः । | अथाधिनक्षत्रं | देवताः । | अथप्रत्यधिनक्षत्रं | देवताः । | अथनक्षत्रतारकाः । | |
|---|---|---|---|---|---|---|---|
| १ अश्विनी | १ अश्विनीकुमारौ | २७ रेवती | पूषा | २ भरणी | यमः | १ अ. | ३ |
| २ भरणी | २ यमः | १ अश्विनी | अ. कु. | ३ कृत्तिका | अग्निः | २ भ. | ३ |
| ३ कृत्तिका | ३ अग्निः | २ भरणी | यमः | ४ रोहिणी | ब्रह्मा | ३ कृ. | ६ |
| ४ रोहिणी | ४ ब्रह्मा | ३ कृत्तिका | अग्निः | ५ मृगशी. | चंद्रः | ४ रो. | ५ |
| ५ मृगशीर्ष | ५ चंद्रः | ४ रोहिणी | ब्रह्मा | ६ आर्द्रा. | शिवः | ५ मृ. | ३ |
| ६ आर्द्रा | ६ शिवः | ५ मृगशी. | चंद्रः | ७ पुनर्वसूः | अदि. | ६ आ. | १ |
| ७ पुनर्वसूः | ७ अदितिः | ६ आर्द्रा | शिवः | ८ पुष्यं | गुरुः | ७ पुन. | ४ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ८ पुष्यम् | ८ गुरुः | ७ पुनर्वसूः | अदितिः | ९ आश्लेषा | सर्पः | ८ पु. | ३ |
| ९ आश्लेषा | ९ सर्पः | ८ पुष्यं | गुरुः | १० मघा | पितरः | ९ आ. | ५ |
| १० मघा | १० पितरः | ९ आश्लेषा | सर्पः | ११ पूर्वाफ. | भगः | १० म. | ५ |
| ११ पूर्वाफल्गुनिः | ११ भगः सूर्यविशेषः | १० मघा | पितरः | १२ उत्तराफ. | अर्यमा | ११ पू. फ. | २ |
| १२ उत्तराफल्गुनिः | १२ अर्यमा सूर्यविशेषः | ११ पू.फ. | भगः | १३ हस्तः | रविः | १२ उ. फ. | २ |
| १३ हस्तः | १३ रविः | १२ उ.फ. | अर्यमा | १४ चित्रा | त्वष्टा | १३ हस्त | ५ |
| १४ चित्रा | १४ त्वष्टा | १३ हस्तः | रविः | १५ स्वाती | वायुः | १४ चि० | १ |
| १५ स्वाती | १५ वायुः | १४ चित्रा | त्वष्टा | १६ विशाखा | इंद्राग्नी २ | १५ स्वा. | १ |
| १६ विशाखा | १६ इंद्राग्नी २ | १५ स्वा. | वायुः | १७ अनू. | मित्रः | १६ वि. | ४ |
| १७ अनूराधा | १७ मित्रःसूर्यविशेषः | १६ वि. | इंद्राग्नी२ | १८ ज्येष्ठा | इंद्रः | १७ अनू. | ४ |
| १८ ज्येष्ठा | १८ इंद्रः | १७ अनू. | मित्रः | १९ सूलं | निर्ऋतिः | १८ ज्ये. | ३ |
| १९ मूलं | १९ निर्ऋतिःराक्षसः | १८ ज्येष्ठा | इंद्रः | २० पू.षा. | आपः | १९ मू. | ११ |
| २० पूर्वाषाढा | २० आपः उदकं | १९ मूलं | निर्ऋतिः | २१ उ.षा. | वि.दे.१३ | २० पू.षा. | २ |

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २१ | उत्तराषाढा | २१ | विश्वेदेवाः१३ | २० | पू.षा. | आपः | २२ | अ.जि. | ब्रह्मा | २१ | उ.षा. | २ |
| २२ | अभिजित् | २२ | ब्रह्मा | २१ | उ.षा. | विश्वेदेवाः१३ | २३ | श्रव. | विष्णुः | २२ | अभि. | ३ |
| २३ | श्रवणं | २३ | विष्णुः | २२ | अ.जि. | ब्रह्मा | २४ | धनि. | वसवः८ | २३ | श्र. | ३ |
| २४ | धनिष्ठाः | २४ | वसवः८ | २३ | श्रव. | विष्णुः | २५ | शत. | वरुणः | २४ | ध. | ४ |
| २५ | शततारका | २५ | वरुणः | २४ | धनि. | वसवः ८ | २६ | पू.भा. | अजैकपात् | २५ | शत. | १०० |
| २६ | पूर्वाभाद्रपदा | २६ | अजैकपात्सू.वि. | २५ | शत. | वरुणः | २७ | उ.भा. | अहिर्बुध्न्यः | २६ | पू.भा. | २ |
| २७ | उत्तराभाद्रपदा | २७ | अहिर्बुध्न्यःसू.वि. | २६ | पू.भा. | अजैकपात् | २८ | रेवती | पूषा | २७ | उ.भा. | २ |
| २८ | रेवती | २८ | पूषा सू.वि. | २७ | उ.भा. | अहिर्बुध्न्यः | १ | अश्विनी | अ०कुमारौ | २८ | रेवती | ३२ |

इति नक्षत्राणां तारकाः ।

इति नक्षत्राणां पूर्वोत्तरनक्षत्रे अधिप्रत्यधिनक्षत्रे। इति नक्षत्रदेवतानां पूर्वोत्तरदेवते अधिप्रत्यधिदेवते । तथाच शौनकोक्तमूलशांतौ । कुंभोपरिन्यसेद्विद्वान् मूलनक्षत्रदेवतां । अधिप्रत्यधिदेवौ च दक्षिणोत्तरदेशयोः । अधिदेवं यजेदादौ ज्येष्ठानक्षत्रदेवतां । तथा प्रत्यधिदेवं च पूर्वाषाढाधिपं यजेत् । इति ॥ तथा मानवसंहितोक्ताश्लेषाशांतौ । कुंभोपरिस्थपात्रे

तु आश्लेषाप्रतिमां यजेत् । तत्पूर्वोत्तरनक्षत्रे दक्षिणोत्तरयोर्यजेदिति । इदं दिक्प्रदर्शनं । अथ नक्षत्रदेवताः । मुहूर्तचिंतामणौ । नासत्यांतकवह्निधातृशशभृद्रुद्रादितीज्योरगा ऋक्षेशाः पितरो भगोऽर्यमरवित्वष्टाशुगाश्च क्रमात् । शक्राग्नी खलु मित्रशक्रनिर्ऋतिक्षीराणि विश्वेविधिर्गोविंदो वसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः ॥१॥ इति । अश्विन्यादिक्रमात् । ऋक्षेशाः नक्षत्रदेवताः । नासत्यौ अश्विनीकुमारौ । अंतको यमः । वह्निः अग्निः । धाता ब्रह्मा । शशभृच्चंद्रः । रुद्रः शंकरः । अदितिः पृथिवी । ईज्यो गुरुः । उरगः सर्पः । पितरः । भगः सूर्यविशेषः । अर्यमा सूर्यविशेषः । रविः सूर्यः । त्वष्टा विश्वकर्मा । आशुगो वायुः । शक्राग्नी इंद्राग्नी । अत्र समुदितयोर्देवतात्वं । मित्रः सूर्यविशेषः । शक्र इंद्रः । निर्ऋती राक्षसः । क्षीरमुदकं । विश्वे विश्वेदेवाः १२ । विधिर्ब्रह्मा । गोविंदो विष्णुः । वसवः अष्टौ देवताविशेषाः । तोयपो वरुणः । अजचरणः सूर्यविशेषः । अहिर्बुध्न्यः सूर्यविशेषः । पूषा सूर्यविशेषः २८ । इतितदर्थः ॥ २८ ॥ इति नक्षत्रदेवताः ॥ अथ नक्षत्राणां तारकाः । मुहूर्तचिंतामणौ ॥ त्रित्र्यंगपंचाग्निकुवेदवह्नयः शरेषुनेत्राश्विशरेंदुभूकृताः । वेदाग्निरुद्राश्वियमाग्निवह्नयोऽब्धयः शतं द्विद्विरदाभतारकाः ।१। इति । अश्विन्यादिक्रमेण भतारकाः नक्षत्रतारकाः । त्रयः ३ त्रयः ३ अंगानि ६ पंच ५ अग्नयः ३ कुः १ वेदाः ४ वह्नयः ३ शराः ५ इषवः ५ नेत्रे २ अश्विनौ २ शराः ५ इंदुः १ भूः १ कृताः ४ वेदाः ४ अग्नयः ३ रुद्राः ११ अश्विनौ २ यमौ २ अग्नयः ३ अब्धयः ४ शतं १०० द्वे २ द्वे २ रदाः दंताः ३२ इति तदर्थः ॥ १ ॥ अत्र नक्षत्रतारकाणां प्रयोजनं नक्षत्रपरिज्ञानार्थं । द्विदैवताराजनितातुदेवरमितिवसिष्ठः । द्विदैवताराविशाखाभमिति ॥ १।२।३ ॥

एकद्विबहुवचनबोधार्थं ॥ इति नक्षत्रतारकाः ॥ अथ नक्षत्राणां रूपाणि । मुहूर्तचिंतामणौ । अश्व्यादिरूपं तुरगास्ययोनिक्षुरोऽन एणास्यमणिर्गृहं च । पृषत्कचक्रे भवनं च मंचः शय्याकरो मौक्तिकविद्रुमं च ॥ १ ॥ तोरणं बलिनिभं च कुंडलं सिंहपुच्छगजदंतमंचकाः । त्र्यस्त्रिचत्रिचरणाभमर्दलो वृत्तमंचयमलाभमर्दलाः ॥ २ ॥ इति । । अश्व्यादिरूपं अश्विन्यादिनक्षत्राणामाकृतिः । तुरगास्यमश्वमुखसदृशं १ योनिर्भगः । तद्वद्रूपं २ क्षुरः नापितक्षुराकृतिः ३ अनः शकटरूपं ४ एणास्यं हरिणमुखसदृशं ५ मणिः वर्तुलमणिसदृशं ६ गृहं वेश्मसदृशं ७ पृषत्को बाणः बाणाकारं ८ चक्रं रथचक्राकारं ९ भवनं गृहं तत्तुल्यं १० मंचः खट्वाकारं ११ शय्या शय्याकारं १२ करो हस्ताकारं १३ मौक्तिकं मुक्ताकारं १४ विद्रुमं प्रवालाकारं १५ तोरणं तोरणाकारं १६ बलिरोदनबलिः तदाकारं १७ कुंडलं कुंडलाकृतिः १८ सिंहपुच्छं तत्सदृशं १९ ज्योतिर्निबंधेतु । मूलरूपं विधातव्यं श्वेतं कुणपवाहनं । खड्गखेटधरं चोग्रं द्विभुजं च वृकाननमिति रूपांतरमुक्तं । गजदंतस्तदाकारं २० मंचकस्तत्सदृशं २१ त्र्यस्त्रि त्रिकोणाकारं २२ त्रिचरणस्त्रिविक्रमो वामनः । तत्स्वरूपं हेमाद्रौ भविष्ये । । सुषुवे नवमे मासि पुत्रं सा वामनं हरिं । ह्रस्वपादं ह्रस्वकायं महाशिरसमर्भकं । पाणिपादोदरकृशं ह्रस्वजंघोरुकेसरं । आबद्धमेखलो दंडी जटी यज्ञोपवीतवान् । कुशच्छत्राजिनधरः कमंडलुविभूषितः । अतसीपुष्पसंकाशः । इति । २३ मर्दलो मृदंगाकारं २४ वृत्तं वर्तुलं २५ मंचो मंचकः तदाकारं २६ यमलं युग्मं (जुळ) तत्सदृशं २७ मर्दलो मृदंगाकारं २८ । इतितदर्थः ॥ इति नक्षत्राणां स्वरूपाणि । । अथ नक्षत्रदेवतानामाकाराः । । विष्णुधर्मोत्तरे । अश्विनीकुमारयोर्लक्षणं । द्विभुजौ सौम्यवरदौ कर्तव्यौ

रूपसंयुतौ । तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः । वामयोः पुस्तकौ कार्यौ दर्शनीयौ तथा द्विजाः । एकस्य दक्षिणे पार्श्वे वामे चान्यस्य चापरा। नारीयुगं प्रकर्तव्यं सुरूपं चारुदर्शनं। रत्नभांडं करे कार्यं चंद्रशुक्लांबरे तथेति। अथ यमलक्षणं । ईषत्पीनो यमः कार्यो दंडहस्तो विजानता । रक्तदृक् पाशभृत्कृष्णो महिषस्थो विभूषितः । कालः करालवदनो नीलांगश्च विभीषणः । पाशहस्तो दंडहस्तः कार्यो वृश्चिकरोमवान् । इति । अथाग्निलक्षणं। पिंगलश्मश्रुकेशांतः पिंगाक्षित्रितयोऽरुणः । छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिधारकः । चिह्नितं चामरेणास्य करमन्यं तु कारयेत् । इति । अथ ब्रह्मणो लक्षणं । यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्भुजः । अक्षमालां स्रुचं बिभृत् पुस्तकं च कमंडलुं । वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव चेति। अथ चंद्रलक्षणं । मत्स्यपुराणे । चंद्रः श्वेतांबरधरो दशाश्वः श्वेतभूषणः। गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी । दशाश्वः दशाश्वरथगः । दशाश्वरथगः सोम इति दानकमलाकरे विश्वकर्मोक्तेः । इति । अथरुद्रलक्षणं । पंचवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः । कपालशूलखट्वांगी चंद्रमौली सदाशिव इति । अथादितिलक्षणं निघंटूक्तेरादितिः पृथिवीत्यनर्थांतरं । तथा च पृथिवीलक्षणं विष्णुधर्मोत्तरे । शुक्लवर्णा मही कार्या दिव्याभरणभूषिता । चतुर्भुजा सौम्यवपुश्च-डांशुसदृशांबरा । रत्नपात्रं सस्यपात्रं पात्रमौषधिसंयुतं । पद्मं करे च कर्तव्यं भुवो यादवनंदन। दिग्गजानां चतुर्णां च कार्या पृष्ठगता तथेति शांतिकमलाकरादौ कमंडल्वक्षसूत्रेध्मदर्भस्रुक्स्रुवभृत्सदा । अदितिरित्युक्तं । अथगुरुलक्षणं मात्स्ये । देव-दैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दंडिनौ वरदौ कार्यौ साक्षसूत्रकमंडलू । इति । अथ सर्पलक्षणं । अक्षसूत्रधराः सर्पा

कुंडिकापुच्छसंयुताः । एकभोगास्त्रिभोगा वा सर्पाः कार्याश्च भीषणाः इति। सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः । फल-
कासिधरस्तीक्ष्णो दिव्याभरणभूषित इति सर्पलक्षणमाश्लेषाशांतावुक्तं। मधुवर्णो भोगयुक्तः खड्गचर्मधरः शुभ इति शांतिमयूखे ।
अथ पितृलक्षणं। यमदीपिकायां दानकमलाकरे च तुलादाने कुशविष्टरपद्मस्थाः पितरः पात्रिणस्तथा । इति। अथ भगलक्षणं ।
शांतिकमलाकरे । पद्माभयकरः पद्मवर्णः सिंहासने स्थितः । भग इति शेषः। इति । अथार्यम्णो लक्षणं । शांतिकमलाकरे ।
पद्मवर्णः पद्मसंस्थः पद्म गर्भसमद्युतिः। अर्यमाइति शेषइति । अथ सूर्यलक्षणं। मात्स्ये । पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वरथसंयुक्तो द्विभुजः सर्वदा रविरिति । त्वष्टा विश्वकर्मा । तल्लक्षणं दानकमलाकरे । विश्वकर्मा तु कर्तव्यः श्मश्रुलो-
रुस्तनाधरः । संदंशपाणिर्द्विभुजस्तेजोमूर्तिधरो महानिति । अथ वायुलक्षणं । विष्णुधर्मोत्तरे । धावन् धरणिपृष्ठस्थो ध्वज-
धारी समीरणः । वरदानकरो धूम्रवर्णः कार्यो विजानतेति । अथेंद्राग्न्योर्लक्षणं । विष्णुधर्मोत्तरे । तत्रेंद्रलक्षणं । चतुर्दंत-
गजारूढो वज्री कुलिशभृत्करः । शचीपतिः प्रकर्तव्यः सहस्राक्षो विभूषित इति । अग्निलक्षणं तु प्रागुक्तमेव । अत्र समु-
दितयोर्दैवतात्वं । अथ मित्रलक्षणं दानकमलाकरे । मित्रः कमलपाणिश्च द्विभुजः पद्मसंस्थितः इति विश्वकर्मोक्तं । इंद्र-
लक्षणं प्रागुक्तमेव । अथ निर्ऋतिलक्षणं दानकमलाकरे । खड्गचर्मधरो नीलो निर्ऋतिर्नरवाहनः । ऊर्ध्वकेशो विरूपाक्षः
करालः कालिकाप्रिय इति । अपां लक्षणं दानकमलाकरे । आपस्त्रीरूपधारिण्यः श्वेता मकरवाहनाः । दधानाः पाश-
कलशौ मुक्ताभरणभूषिताः। इति । अथ विश्वेषां देवानां ल० । दानकमलाकरे तुलाप्रयोगे । विश्वेदेवास्तु सर्वेऽपि दक्षिणे

बाणपाणयः। कर्तव्या वामपाणौ तु सशरासनपाणयः। सर्वे वस्वादयस्त्रयोदश १३। इति। ब्रह्मलक्षणं प्रागुक्तमेव। अथ विष्णुलक्षणं। दानकमलाकरे। विष्णुः कौमोदकी पद्मशंखचक्रधरः क्रमात्। प्रदक्षिणं दक्षिणाधःकरादारभ्य नित्यश इति। अथ वसुलक्षणं दानकमलाकरे। वसुस्ततः। चापबाणधरः शुक्ल इति श्वेतवर्णश्चतुर्भुजः साक्षसूत्रकमंडलुर्वरदाभयपाणिरितिधनिष्ठाशांतौ वसवोऽष्टौ। अथ वरुणलक्षणं दानकमलाकरे। नागपाशधरो रक्तभूषणः पद्मिनीपतिः। वरुणोऽबुपतिः स्वर्णवर्णो मकरवाहनः। इति। अजैकपालक्षणं शांतिकमलाकरे। वामपादकरं भूम्यामाकाशेत्यपरद्वयं। प्रसार्य प्रांजलिः साक्षादीश्वरं चिंतयन् स्थितः। अजैकपादितिशेषः। अहिर्बुध्न्यलक्षणं उत्तराभाद्रपदारोगशांतौ। अहिर्बुध्न्यः श्वेतवर्णश्चतुर्भुजः परशुपद्मपाशदंडधरः। इति। पूषलक्षणं। पद्मासनस्थः पद्मवर्णः द्विभुजः पद्मकरः पूषेतिरेवत्यृक्षरोगशांतौ। इत्यष्टाविंशतिनक्षत्राणामाकाराः॥ अथ अधोमुखोर्ध्वमुखतिर्यङ्मुखनक्षत्राणि॥ मुहूर्तचिंतामणौ। मूलाहिमिश्रोग्रमधोमुखं भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयंध्रुवं। तिर्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विभानीदृशकृत्यमेषुसत्। इति मूलं। अहिराश्लेषा। मिश्रं कृत्तिकाविशाखे उग्रं पूर्वात्रयमघाभरण्यः। एतानि नव नक्षत्राणि अधोमुखानि। एषु ईदृशकृत्यमधोमुखकृत्यं सत् समीचीनं। अधोमुखकृत्यानि गरुडपुराणे। वापीकूपतडागादिखननं च तृणादिकं। देवतागारखननं निधानखननं तथा। गणितं ज्योतिषारंभं खनीबिलप्रवेशनं। कुर्यादधोगतान्येवं कार्याणि वृषभध्वजेति। आर्द्रा। ईज्यः पुष्यः। हरित्रयं श्रवणधनिष्ठाशततारकाः। ध्रुवमुत्तरात्रयरोहिण्यः। एतानि नव नक्षत्राणि। ऊर्ध्वास्यानि ऊर्ध्वमुखानि। एषु ऊर्ध्वमुखमुच्छ्रितं

सर्वं कार्यं। सत् शुभं। ऊर्ध्वमुखकृत्यं गरुडपुराणे। एषु राज्याभिषेकं च पट्टबंधं च कारयेत्। इति। मैत्रं मृदुनक्षत्रं मृगरेवतीचित्रानुराधाः। करो हस्तः। अनिलः स्वाती। अदितिः पुनर्वसुः। ज्येष्ठा। आश्विनमश्विनी। एतानि नव नक्षत्राणि तिर्यङ्मुखानि। एषु ईदृशकृत्यं तिर्यङ्मुखकृत्यं सच्छुभं। तिर्यङ्मुखं पार्श्वमुखं। पार्श्वमुखकृत्यानि गरुडपुराणे। गजोष्ट्राश्वबलीवर्द्दमनं महिषस्य च। बीजानां वपनं कुर्याद्गमनागमनादिकं। चक्रयंत्ररथादीनां नावादीनां प्रवाहणं। पार्श्वेषु यानि कर्माणि कुर्यादेतेषु तानि चेति। प्रतिनक्षत्रं संज्ञाद्वयं चाह वसिष्ठः। ध्रुवमचलं क्षिप्रं लघु चरं चलं मैत्रमृदुसंज्ञे। साधारणमिश्राख्यं क्रूरोग्रं तीक्ष्णदारुणं तुल्यमिति मुहूर्तचिंतामणौ। अथ ध्रुवगणः तत्कृत्यं च। उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरं। तत्र स्थिरं बीजगेहशांत्यारामादिसिद्धये॥ १॥ अथ चरगणस्तत्कृत्यं च। स्वात्यादित्यश्रुतेस्त्रीणि चंद्रश्चापि चरं चलं। तस्मिन्गजादिकारोहो वाटिकागमनादिकं॥ २॥ अथ उग्रगणस्तत्कृत्यं च। पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथा। तस्मिन् घाताग्निशाठ्यानि विषशस्त्रादि सिध्यति॥ ३॥ अथ मिश्रगणस्तत्कृत्यं च। विशाखाग्नेयभे सौम्यो मिश्रं साधारणं स्मृतं। तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादिसिद्धये॥ ४॥ अथ लघुगणस्तत्कृत्यं च। हस्ताश्विपुष्याभिजितः क्षिप्रं लघुगुरुस्तथा। तस्मिन्पण्यरतिज्ञानभूषाशिल्पकलादिकं॥ ५॥ अथमृदुगणस्तत्कृत्यं च। मृगांत्यचित्रामित्रर्क्षं मृदुमैत्रं भृगुस्तथा। तत्र गीतांबरक्रीडामित्रकार्यविभूषणं॥ ६॥ अथ तीक्ष्णगणस्तत्कृत्यं च। मूलेंद्रार्द्राहिभं सौरिस्तीक्ष्णं दारुणसंज्ञकं। तत्राभिचारघातोग्रभेदाः पशुदमादिकं॥ ७॥ इति। अथ स्त्रीपुन्नपुंसकानि नक्षत्राणि॥ ज्योतिषरत्ने उत्तरार्द्धे।

आर्द्रादिदशकं स्त्रीणां विशाखात्रिनपुंसकं। मूलाच्चतुर्दशं पुंसां नक्षत्राणि क्रमाद्बुधैरिति यदुक्तं लिंगविवेचनं तत्तद्दृष्टिज्ञान-
प्रयोजनमात्रं । तथा पुन्नामा श्रवणास्तिष्यो हस्तश्चैव पुनर्वसुः। अभिजित्प्रोष्ठपाच्चैव अनूराधा तथाश्वयुगिति। गर्गः। हस्तो मूलं
श्रवणः पुनर्वसुर्मृगशिरस्तथापुष्यः । पुंसंज्ञकेषु कार्येष्वेतानि शुभानि धिष्ण्यानीति वराहश्च। एतदपि। पुंसंज्ञककार्यमात्रप्रयो-
जनं। अथ शांतिकादिहोमविषयकं लिंगवचनविवेचनं। लिंगानि तंत्रांतरे। हस्तस्वातिश्रवणा अक्लीबे मृगशिरो न पुंसि स्यात्।
पुंसि पुनर्वसुपुष्यौ मूलं त्वस्त्री स्त्रियः शेषाः।इति । वचनविवेचनं कर्मप्रदीपे । आग्नेयाद्येऽथ सर्पाद्ये विशाखाद्ये तथैव च ।
आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च । द्वंद्वान्येतानि वहुवदृक्षाणां जुहुयात्सदा । द्वंद्वद्वयं द्विवच्छेषमवशिष्टान्यथै-
कवदिति । एतदर्थः । अश्विन्याद्याश्चतस्त्रस्त्रियां बहुत्वे । मृगशिराः । स्त्रीक्लीबयोरेकत्वे । आर्द्रास्त्र्येकत्वे । पुनर्वसुपुष्यौ
पुंस्येकत्वे । आश्लेषाद्ये स्त्रीबहुत्वे । फल्गुन्यौ स्त्रियां द्वित्वे । हस्तो मिथुनैकत्वे। चित्रा स्त्रियामेकत्वे । स्वातीमिथुनैकत्वे ।
विशाखाद्ये स्त्रियांबहुत्वे । ज्येष्ठा स्त्रियामेकत्वे । मूलमस्त्रियामेकत्वे । आषाढाद्वयं स्त्रीबहुत्वे। श्रवणो मिथुनैकत्वे । धनि-
ष्ठाद्ये स्त्रीबहुत्वे । भाद्रपदाद्वयं स्त्रीद्वित्वे । रेवती स्त्र्येकत्वे । जुहुयादिति पदोपादानात् शांतिकादिहोममात्रविषयत्वात् ।
इति तदर्थः ॥ अथ राणायणिच्छंदोगानामाश्वलायनमंत्राः तैत्तिरीयमंत्रा वा । कौथुमिच्छंदोगानां तु कातीया एवेति ।
विष्णुधर्मोत्तरोक्तास्तु सर्वेषां साधारणाः । । अत्र नक्षत्रं तद्देवतां च पूजयेत् । विधानं तत्र कर्तव्यं जन्मनक्षत्रपूजनं ।
नक्षत्रदेवता पूज्या त्वाधिमत्याधिपूर्वकं। यस्य ऋक्षस्य यद्द्रव्यं दक्षिणाविधिमंत्रणं। तच्च तस्य विधातव्यमृक्षदैवततुष्टये । स्वगृह्योक्त-

विधानेन हवनं तत्र कारयेदिति ज्योतिर्निबंधोक्तेः ॥ रक्तवस्त्रेण संछाद्य वस्त्रयुग्मेन वेष्टयेत् । कलशोपरि एकं रक्त-
वस्त्रमाच्छाद्य तस्मिन् रक्तवस्त्रे प्रतिमयोः नक्षत्रं नक्षत्रदेवतां च पूजयेत् । उभयोरेकैकं श्वेतवस्त्रमिति वासोयुग्ममर्पये-
दित्यर्थः ॥ स्वशाखोक्तेन मार्गेण कुर्यादग्निमुखं ततः । अनेनैव तु मंत्रेण हुनेदष्टोत्तरं शतं । तत्तदृक्षोक्तमंत्रेणेत्यर्थः ।
प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तांतमेव च ॥ कृत्वेति शेषः । प्रायश्चित्तांते पूर्णाहुतिहोमः । दानं होमविधेः पश्चाद्दानादन्वभि-
षेचनमिति ज्योतिर्निबंधवचनात् । पूर्णाहुत्यंते हरिहरदेवतापूजनं तयोर्दानं चोक्तं ज्योतिर्निबंधे । भक्त्या हरिहरौ देवौ
स्वर्णरूप्यमयौ शुभौ । संपूजयेदिति शेषः । पाठक्रमाद्धरिः स्वर्णमयः । हरो रूप्यमयः । दानमंत्रः ज्योतिर्निबंधे । विविध-
स्यास्य विश्वस्य पितरौ विश्वतोमुखौ । प्रीयेतां मूर्तिदानेन देवौ हरिहरावुभौ । दानं होमविधेः पश्चाद्दानादन्वभिषेचनमिति ।
अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः । पितृपुत्रयोरित्यत्र पितृग्रहणमुपलक्षणं । यस्य नक्षत्रे जन्म तेन सह बालकस्या-
भिषेक इत्यर्थः । वस्त्रालंकारगोदानैराचार्यं पूजयेत्पुनः । ऋत्विजो दक्षिणां दद्यान्माषत्रयसुवर्णकं । देवताप्रतिमादानं धान्य-
वस्त्रादिभिः सह । यानशय्यासनादीनि दद्याद्दोषप्रशांतये । भोजयेद्ब्राह्मणान् सर्वान् वित्तशाठ्यविवर्जितं । इति वृद्ध-
गार्ग्यः ॥ अभिषेचनपूर्वा च विप्रपूजा स्मृता शिवे । शिवे इति संबुद्धिः । आचार्यपूजनांते हरिहरयोर्मंदिरं प्रति तत्पू-
जनार्थं गमनं । ततोऽभिगम्य गोविंदशूलिनोश्च निकेतनं । तूर्याणां च निनादेन जयघोषेण पार्वति । पूजाविधिं समाप्यैवं
सर्वोपस्करसंयुतं । प्रार्थयेद्देवदेवेशौ लक्ष्मीशैलसुतेश्वरौ । दंडवत्प्रणिपातेन वंदनीयौ पुनःपुनः । ततः स्वगृहमागत्य ब्राह्म-

णान् भोजयेत्सुधीः। तोषयेद्दक्षिणादानैर्यथाशक्त्या वरानने। एवं कृते विधाने तु विघ्ननाशो भवेद्ध्रुवं। इति ज्योतिर्निबंधश्च।

अथैकनक्षत्रजननशांतिप्रयोगः॥ श्रीः॥ सर्वत्रादौ गोमुखप्रसवः। पितृमातृसुतारिष्टत्वात्। भ्रातृभगिन्योर्नक्षत्रोत्पत्तावपि। तत्रनक्षत्रोत्पन्नस्वसुतारिष्टत्वाच्च। ततो ममास्य शिशोः मातुः पितुः भ्रातुः स्वसुर्वा अमुकनाम एकनक्षत्रजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपर०र्थं वृद्धगर्गोक्तां एकनक्षत्रजननशांतिं करिष्ये। इति संकल्प्य। गणपतिपूजनादिअग्निप्रतिष्ठापनांतं। अग्नेरीशाने वेदिकायां धान्यपुंजाष्टदले यथाविधि कलशं प्रतिष्ठाप्य। पूर्णपात्रोपरि रक्तवस्त्रे सौवर्णप्रतिमायां अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं तन्नक्षत्राकारां नक्षत्रप्रतिमां तन्नक्षत्रदेवताप्रतिमां च प्रतिष्ठाप्य आवाह्य ध्यात्वा च। तन्नक्षत्रमंत्रेण तन्नक्षत्रदेवतामंत्रेण च नक्षत्राय नमः नक्षत्रदेवतायै नमः इत्यासनादिषोडशोपचारैः संपूजयेत्। उभयोरेकैकं श्वेतं वासः। इति वासोयुग्मसमर्पणं॥ ततो दक्षिणतो ब्रह्मासनास्तरणादि। चरुं श्रपयित्वा। आज्यभागांतं। द्रव्यत्यागः। प्रधानहोमः। होमद्रव्याणि। यज्ञियवृक्षसमिधः। चरुः। आज्यं। प्रत्येकं प्रतिद्रव्यमष्टोत्तरशतं होमसंख्या। होममंत्राः पूजामंत्रा एव। नक्षत्राकाराः, नक्षत्रदेवताकाराः, तद्देवताः तयोरधिप्रत्यधिदेवताः, नक्षत्रमंत्राः, तद्देवतामंत्राः, नक्षत्राणां लिंगवचनानि। पूर्वं मूलवचोव्याख्यान उक्ताः। ततो द्रष्टव्याः। उत्तरपूजादिश्रेयःसंपाद्यदानांतं। ततो हरिहरपूजनं। एकस्मिन् धान्यपुंजे एकं कलशं विधिना प्रतिष्ठाप्य। पूर्णपात्रे सौवर्णराजतप्रतिमयोः अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं क्रमेण हरिं हरं च प्रतिष्ठाप्य। आवाह्य ध्यात्वा च ॐ इदंविष्णु० ॐ त्र्यंबकमिति च मंत्रेण। ॐहरिहराभ्यां नम इति षोडशोपचारैः संपूज्य। ततः

प्रतिग्रहीतृविप्रपूजनं । एकस्मै विप्राय हरिहरमूर्तिद्वयदानं । तत्र मंत्रः । विविधस्यास्य विश्वस्य पितरौ विश्वतोमुखौ । प्रीयेतां मूर्तिदानेन देवौ हरिहरावुभौ । इति ॥ हरिहरदानांते अभिषेकः । यस्य नक्षत्रे जन्म तेन सह बालस्याभिषेकः । स्नानं । कांस्याज्यावलोकनं । सदक्षिणं तद्दानं च । प्रत्यृत्विजं शांत्यंगदक्षिणा माषत्रयं सुवर्णं । तन्मूल्यं वा । यानशय्यासन-सप्तधान्यदशदानगोदानानि यथाविभवं दद्यात् । विसर्जनं ॥ ततो वाद्यघोषेण मंत्रघोषेण च सुवासिनीः पुरस्कृत्य सर्त्विक् सपत्नीको यजमानः बालकेन सह हरिहरयोर्मंदिरं गत्वा तत्र तयोः पूजोत्सवं कृत्वा दंडवत्प्रणिपत्य । विप्रेभ्यो भूयसीं दद्यात् । स्वगृहमागत्य ब्राह्मणान् भोजयित्वा । स्वयं भुंजीत । आशीर्ग्रहणं चेति । इति शुक्लयजुःशाखीयकर्मकांड-प्रदीपे जननशांतिककांडे वृद्धगार्ग्यज्योतिर्निबंधोक्त एकनक्षत्रजननशांतिप्रयोगः परिसमाप्तः ॥छ॥

अथ तिथिवारनक्षत्राणां विषघटीषु जनने शांतिः ॥ श्रीः ॥ वृद्धगार्ग्यः ॥ विषनाडीषु संजातः पितृमातृधनात्मनां । नाशकृद्विषशस्त्रास्त्रैः क्रूरलग्नेऽशकेऽपिवा । तद्दोषपरिहाराय शांतिकर्म समारभेत् । रुद्रो यमोऽग्निर्मृत्युश्च देवताः परिकी-र्तिताः । सुवर्णेन यथाशक्ति तत्तल्लक्षणलक्षिताः । प्रतिमाः कारयित्वा तु आढकव्रीहिभिः स्थले । स्थंडिलं परिकल्प्याथ कुंभमौषधिसंयुतं । जलैः संपूर्य संस्थाप्य मृदादि प्रक्षिपेत्ततः । वस्त्रद्वयेन संवेष्ट्य पंचरत्नानि निक्षिपेत् । कुंभोपरि तु संस्थाप्य चतस्रः प्रतिमास्तथा । तत्तन्मंत्रैश्च संपूज्य गंधपुष्पोपहारकैः । कद्रुद्रायेति मंत्रेण यमायसोममित्यथ । अग्निर्मूर्द्धे-तिमंत्रेण परंमृत्यो इति त्वथ । एतैश्चतुर्भिर्मंत्रैश्च क्रमादर्चेद्धुनेत्तथा । समिच्चरुघृतद्रव्यैः प्रत्येकं च यथाक्रमं । ऋत्विग्भिश्च

सहाचार्यो हुनेदष्टसहस्रकं । अष्टोत्तरशतं वापि अष्टाविंशतिमेव वा । ततस्तिलैर्हुनेद्देवांस्तत्तन्मंत्रैश्च मंत्रवित् । ततोऽभिषेच-
येद्बालं मंत्रैः पौराणिकैः क्रमात् । वक्ष्यमाणैरिति शेषः । तेचाभिषेकमंत्राः प्रीयतां भगवानीश इत्यादयश्चत्वारः । दानमंत्रा अपि
त एव चत्वारः । प्रीयतां भगवानीशः पिनाकी सर्वतोमुखः । तवमूर्तिप्रदानेन सर्वाभीष्टप्रदो भव ॥ १ ॥ ईषत्पीनो
यमः कालो दंडहस्तः प्रसन्नधीः । रक्तदृङ्नीलकायश्च महिषस्थः शिवं करु ॥ २ ॥ पिंगभ्रूश्मश्रुकेशांतः पिंगाक्षचरणो-
ऽरुणः । छागस्थः साक्षसूत्रश्च सप्तार्चीरक्तलोचनः ॥३॥ तवमूर्तिप्रदानेन मम पापं विनाशय । दंष्ट्राकरालवदनो नीलांजन-
समाकृतिः । रक्ताक्षोसिगदापाणिर्मृत्युर्मां पातु सर्वदा ॥ ४ ॥ दानमेवंविधैर्मंत्रैर्यथाविधि समाहितः ॥ ५ ॥ गोभूहिरण्य-
वस्त्रैश्च आचार्यं पूजयेत्सुधीः । एवं कुर्याद्विधानेन विषदोषः प्रशाम्यतीति । इति वृद्धगार्ग्योक्ता विषघटीजननशांतिः ।
अथ तिथीनां विषनाडीराह वृद्धगर्गः । तिथी (१/१५) षु (२/५) नागा (३/८) द्रि (४/७) गिरी (५/७) श (६/११) वारिधि (७/४) गजा (८/८) द्रि (९/७) दिक् (१०/१०)
पावक (११/३) दिक् च (१२/१०) भास्करः (१३/१२) ॥ मुनी ७ भ (१५-३०/८) संख्याप्रथमातिथेः क्रमात् परं विषाख्यं घटिकाचतुष्टयमिति ।
प्रतिपदादिक्रमेण पंचदशघटिकाद्यनंतरं घटिकाचतुष्टयं ४ विषनाड्यः ॥ ७ ॥ ॥ अथ वाराणां विषनाडीराह वृद्धगर्गः ॥
विंशच्च २० तु ४ द्वादश १२ दिक् १० च शैला ७ बाणाश्च ५ तत्त्वानि २५ यथाक्रमेण । सूर्यादिवारेषु भवंत्यनंतरं
नाड्यो विषाख्यं घटिकाचतुष्टय ४ मिति ॥ रविवासरादिक्रमेण विंशतिघटिकाद्यनंतरं घटिकाचतुष्टयं विषनाड्यः ।

| | | | | | |
|---|---|---|---|---|---|
| १ | १५ | ४ | ९ | ७ | ४ |
| २ | ५ | ४ | १० | १० | ४ |
| ३ | ८ | ४ | ११ | ३ | ४ |
| ४ | ७ | ४ | १२ | १० | ४ |
| ५ | ७ | ४ | १३ | १२ | ४ |
| ६ | ११ | ४ | १४ | ७ | ४ |
| ७ | ४ | ४ | १५ | ८ | ४ |
| ८ | ८ | ४ | ३० | ८ | ४ |

इति तिथीनां विषघटीकोष्टकम् ॥

| | | | |
|---|---|---|---|
| १ | रविवा० | २० | ४ |
| २ | सोमवा० | ४ | ४ |
| ३ | भौमवा० | १२ | ४ |
| ४ | बुधवा० | १० | ४ |
| ५ | गुरुवा० | ७ | ४ |
| ६ | शुक्रवा० | ५ | ४ |
| ७ | शनिवा० | २५ | ४ |

॥ इति वाराणां विषघटीकोष्टकम् ॥

॥ अथ नक्षत्राणां विषनाडीराह नारदः ॥

खमार्गणा ५० वेदपक्षाः२४ खरामा ३० व्योमसागराः ४० ॥ वार्धिचंद्रा १४ रूपदस्रा २१ खरामा ३० व्योमबाहवः २० ॥१॥ द्विरामाः ३२ खाग्नयः ३० शून्यदस्राः २० कुंजरभूमयः १८ ॥ रूपपक्षाः २१ व्योमदस्रा २० वेदचंद्रा १४ श्चतुर्दश १४ ॥२॥ शून्यचंद्रा १० वेदचंद्राः १४ षडक्षा ५६ वेदबाहवः २४। शून्यदस्राः २० शून्यचंद्राः १० पूर्णचंद्रा १० गजेंदवः १८ ॥३॥ तर्कचंद्रा १६ वेदपक्षाः २४ खरामाश्चा ३० श्विनीक्रमात् ॥ आभ्यः पराः स्युर्घटिकाश्चतस्रो विषसंज्ञिकाः ॥४॥ इति । अश्विन्यादिक्रमेण पंचाशदादि घटिकाद्यनंतरं घटिकाचतुष्टयं विषनाड्यः ॥

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | अश्विनी | ५० | ४ | १० | मघा | ३० | ४ | १९ | मूलं | ५६ | ४ |
| २ | भरणी | २४ | ४ | ११ | पूर्वाफ. | २० | ४ | २० | पू. षा. | २४ | ४ |
| ३ | कृत्तिका | ३० | ४ | १२ | उत्त. फ. | १८ | ४ | २१ | उ. षा. | २० | ४ |
| ४ | रोहिणी | ४० | ४ | १३ | हस्तः | २१ | ४ | २२ | श्रवण. | १० | ४ |
| ५ | मृगशी. | १४ | ४ | १४ | चित्रा | २० | ४ | २३ | धनिष्ठा | १० | ४ |
| ६ | आर्द्रा | २१ | ४ | १५ | स्वाती | १४ | ४ | २४ | श.ता. | १८ | ४ |
| ७ | पुनर्वसु | ३० | ४ | १६ | विशाखा | १४ | ४ | २५ | पू. भा. | १६ | ४ |
| ८ | पुष्य | २० | ४ | १७ | अनूराधा | १० | ४ | २६ | उ. भा. | २४ | ४ |
| ९ | आश्लेषा | ३२ | ४ | १८ | ज्येष्ठा | १४ | ४ | २७ | रेवती | ३० | ४ |

॥ इति नक्षत्राणा ॥
॥ विषघटीकोष्टकम् ॥

अथाग्रे विषनाडी-
जननशांतिप्रयोगः ॥

अथ विषनाडीजननशांतिप्रयोगः ॥ तत्रादौ गोमुखप्रसवः ॥ ततः मम अस्य शिशोः अमुकतिथेः, वारस्य, नक्षत्रस्य, वा, विषनाडीषु जननसूचितपितृमातृधनात्मनाशादिसर्वारिष्टपरिहारद्वाराश्रीपर०र्थं वृद्धगर्गोक्तां सग्रहमखां अमुकतिथि, वार, नक्षत्र, विषनाडीजननशांतिं करिष्ये । इति संकल्प्य। गणपतिपूजनादि अग्निप्रतिष्ठापनांतं। अग्नेः पूर्वतो वेदिकायां धान्य-

पुंजाष्टदले विधिना एकं कलशं प्रतिष्ठाप्य । पूर्णपात्रे सौवर्णप्रतिमासु अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं उदक्संस्थं क्रमेण । रुद्रं १ यमं २ अग्निं ३ मृत्युं च ४ प्रतिष्ठाप्य । आवाह्य ध्यात्वा च क्रमेण ॐ त्र्यंबकं० १ ॐ सुमाय त्वा० २ ॐ अग्निर्मूर्द्धा०३ ॐ परंमृत्यो० ४ इति तत्तन्मंत्रेण । आसनादिषोडशोपचारैः पूजयेत् । तदुत्तरतो ग्रहप्रतिष्ठापनं रुद्रकलशप्रतिष्ठापनांतं ॥ ततो दक्षिणतो ब्रह्मासनास्तरणादि । चरुं श्रपयित्वा । आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । तत्रहोमद्रव्याणि । यज्ञियसमिधः । चरुः । आज्यं । तिलाः ४ । प्रत्येकं प्रतिद्रव्यं । अष्टोत्तरसहस्रं १००८ । अष्टोत्तरशतं १०८ । अष्टाविंशति २८ वा होमसंख्या । होममंत्राः पूजोक्ताः । उत्तरपूजनादिविसर्जनांतं । तत्राभिषेके । प्रीयतां भगवानीशः पिनाकी सर्वतोमुखः । तव मूर्तिप्रदानेन सर्वाभीष्टप्रदो भव ॥१॥ ईषत्पीनो यमः कालो दंडहस्तः प्रसन्नधीः । रक्तदृङ् नीलकायश्च महिषस्थः शिवं कुरु ॥२॥ पिंगभ्रूश्मश्रुकेशांतः पिंगाक्षचरणोऽरुणः । छागस्थः साक्षसूत्रश्च सप्तार्चीं रक्तलोचनः । तव मूर्तिप्रदानेन मम पापं विनाशय ॥३॥ दंष्ट्राकरालवदनो नीलांजनसमाकृतिः । रक्ताक्षोऽसिगदापाणिर्मृत्युर्मां पातु सर्वदा ॥४॥ इति चत्वारः पौराणमंत्राः । इति विशेषः । स्नानं । आज्यावलोकः । तद्दानं च । मूर्तिप्रतिमादाने । क्रमेण । अभिषेकोक्ताश्चत्वारः पौराणमंत्राः । तिथिवारनक्षत्राणां मध्ये द्वयोस्त्रयाणां वा विषनाडीषु जननैकसमये तु तंत्रेणैकैव शांतिः । देशकालकर्तृफलदेवतासामान्यात् । न पृथक्पृथगिति ॥ इतिशुक्लय० प्रदीपे शांतिककांडे विषनाडीजननशांतिप्रयोगः परिसमाप्तः ।

अथ त्रिकप्रसवशांतिः ॥ श्रीः ॥ शांतिसर्वस्वे ॥ सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि । मातापित्रोः कुलस्यापि

तदाऽरिष्टं महद्भवेत् । ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद्भवेत् । तत्र शांतिं प्रकुर्वीत वित्तशाठ्यविवर्जितः । जातस्यैकादशाहे वा द्वादशाहे शुभे दिने । आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरं । सह वा ग्रहयज्ञः स्याद्यथावित्तानुसारतः । ब्रह्मविष्णुमहेशेंद्रप्रतिमाः स्वर्णतः कृताः । पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः । पंचमेकलशे रुद्रं पूजयेद्रुद्रसंख्यया । रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्वशः । द्विज एको जपेद्धोमकाले शुचिः समाहितः । आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुं । अष्टोत्तरसहस्रं वा शतं वा त्रिशतं तु वा । देवताभ्यश्चतुर्वक्रादिभ्यो ग्रहपुरस्सरं । ब्रह्मादिमंत्रैरिंद्रस्य यतइंद्रभयामहे । ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः । अभिषेकं कुटुंबस्य कृत्वाचार्यं प्रपूजयेत् । हिरण्यं धेनुरेका च ऋत्विग्भ्यो दक्षिणां ततः । प्रतिमागुरवे देया उपस्कारसमन्विता । कांस्ये आज्यावेक्षणं कृत्वा शांतिपाठं तु कारयेत् । ब्राह्मणान् भोजयेच्छक्त्या दीनानाथांश्च तर्पयेत् । एवं शांतिविधानेन सर्वारिष्टं प्रलीयते । इति ॥ अथमूलार्थः । सुतत्रये तत्रयेचेत्युभयत्र जनिते इतिसप्तम्यंताध्याहारः । जनीप्रादुर्भावे इतिधात्वर्थः । स्यादितिअस्सत्तायामितिधात्वर्थः । तेन सुतत्रये सुतात्रये वा जीवमानेसति जातः सुता सुतो वा जीवतिचेच्छांतिकं । नान्यथेत्यर्थः । मातापित्रोरिति । मात्ररिष्टं १ पित्ररिष्टं २ वंशारिष्टं ३ ज्येष्ठनाशः ४ धननाशः ५ उक्तादन्यन्महद्दुःखं ६ वा । इति अनियतानि षट्फलानि । अनियतत्वेऽपि मातृपित्ररिष्टयोः पाक्षिकसंभवेन तत्परिहारस्याप्यावश्यकतया गोमुखप्रसवोऽत्रनियतः । जातस्यैकादशाहइति मुख्यः शांतिककालः । एकादशाहद्वादशाहयोरतिक्रमेसति शुभे दिनइति । ग्रहयज्ञपुरःसरं, सहवा ग्रहयज्ञःस्यात्, इतितुशांतेःपूर्वं पृथक्प्रयोगतया, शांतिकेनसहवा, इतिग्रहमखा-

नुष्ठानेनैद्वैधंबोधयति । ब्रह्मविष्णुमहेशेंद्रइति, पंचमे कलशे रुद्रमिति ब्रह्मादयः पंचशांतिकदेवताः। शक्तित इति स्वर्णतःकृता-
इत्यत्रान्वीयते । वक्ष्यमाणे पंचमे कलशे रुद्रमितिवाक्ये पंचमइतिकलशसंख्यानिर्देशात् कलशानामुपरीतिबहुवचनांतेन
समासः । पूजयेद्रुद्रसंख्ययेति। रुद्रा एकादशसंख्या यस्याः। तया रुद्रसंख्यया। स्त्रीनिर्देशेनरुद्रैकादशिन्येति । रुद्रं पूजयेदि-
त्यन्वयः । रुद्रैकादशिन्यभिषेकपूर्वकं रुद्रपूजनमिति तत्त्वं । रुद्रसूक्तानि चत्वारीति। चत्वारि ऋग्यजुःसमाथर्वणिकानि रुद्र-
सूक्तानि । सर्वशः सर्वाणि । सार्वविभक्तिकःशस् । शांतिसूक्तानीत्यस्योपसर्जनं । ऋग्यजुःसमाथर्वणिकानि शांतिसूक्तानी-
त्यर्थः । तानिच प्रयोगे वक्ष्यंते । द्विजएकइति । एकएव जापकइत्यर्थः । होमकालइति जपकालः । समिदाज्यतिलांश्चरुमि-
तिप्रधानदैवतहोमद्रव्याणि । अष्टोत्तरसहस्रंवेति प्रतिदैवतं प्रतिद्रव्यं पाक्षिकी होमसंख्या । अष्टोत्तरमितिसर्वत्रान्वेति । तेन
अष्टोत्तरंसहस्रं १००८ वा । अष्टोत्तरंशतं १०८ वा । अष्टोत्तरंत्रिशतं ३०८ तुवेति । देवताभ्यश्चतुर्वक्त्रादिभ्योग्रहपुरः-
सरमिति, सहपक्षेऽपिप्रधानहोमात्पूर्वंग्रहहोमः । ततःप्रधानहोमः । इतिक्रमविधिः । इतिमूलार्थः ।

अथत्रिकप्रसवशांप्रतियोगः । गोमुखप्रसवः । आचमनादिदेशकालसंकीर्तनांतं । संकल्पः । सुतत्रयजननानंतरं सुताजनन,
( सुतात्रयजननानंतरंसुतजनन, ) निमित्तोत्पत्तिकं, यत् मात्ररिष्टं, पित्ररिष्टं, कुलारिष्टं, ज्येष्ठनाशः, धनहानिः, उक्ते-
तरत् महद्दुःखं वा, अनियतं अरिष्टं, तद्विनाशार्थं, आदित्यादिग्रहोत्थारिष्टविनाशार्थंच, रव्यादिग्रहब्रह्मविष्णुमहेशेंद्र-
देवताप्रसादसिद्धिपूर्वकशुभफलावाप्तये, श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां त्रिकप्रसवशांतिं करिष्ये । इतिसंकल्पः ।

गणपतिपूजनादिनांदीश्राद्धांतं । आचार्यादिऋत्विग्वरणं । रुद्रैकादशिन्यभिषेकार्थमेकविप्रवरणं । रुद्रसूक्तशांतिसूक्तजपार्थं चैकविप्रवरणं, मधुपर्कः । यजमानस्य मांगल्यकरणं । दिग्रक्षणं । पंचगव्यकरणं । कर्मभूमिप्रोक्षणं । भूमिपूजनं । अग्निप्रतिष्ठापनं । पंचकलशस्थापनं प्रसन्नोभवसर्वदेत्यंतं । पूर्णपात्रोपरि उदकसंस्थं क्रमेण ब्रह्म १ विष्णु २ महेश ३ इंद्र ४ रुद्र ५ देवतानां स्वर्णमयीषु प्रतिमासु अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं षोडशोपचारैः पूजनं । तत्र रुद्रदेवताया रुद्रैकादशिन्यभिषेकः । तत्तद्देवतामंत्राः ॐ यत्तेपवित्र० पुनातुमा ॥१॥ इतिब्रह्मणः ॐ इदंविष्णु० सुरे ॥२॥ इतिविष्णोः॥ ॐ योभूतानामधिपतिर्यस्मिँल्लोकाऽअधिश्रिताः ॥ यऽईशेमहतो महाँस्तेनंगृण्णहामित्वामहंम्मयिगृण्णहामिन्त्वामहम् ॥ ३ ॥ इतिमहेशस्य । ॐ त्रातारमिन्द्रम० धात्विन्द्रः ॥४॥ इतीन्द्रस्य । ॐ मानस्तोकेतनये० हवामहे ॥५॥ इतिरुद्रस्य ॥ ततो ग्रहस्थापनं । रुद्रकलशस्थापनं । दक्षिणतो ब्रह्मासनमास्तीर्येत्यादिसिद्धचरुं प्रोक्ष्य आज्यभागांतं । द्रव्यत्यागः । होमद्रव्याणि । समिधः १ आज्यं २ तिलाः ३ चरुश्चेति ४ । आदौ ग्रहहोमः । ततः प्रधानहोमः । पूर्वोक्तान्येव होमद्रव्याणि । प्रतिदैवतं प्रतिद्रव्यं होमसंख्या । १००८। ३०८।१०८ । इतिवा । होमकाले एकर्त्विक्रुद्रदेवतासमीपे ऋग्यजुःसामाथर्वणिकानि चत्वारि रुद्रसूक्तानि ४ ततस्तथैव चत्वारि शांतिसूक्तानि च जपेत् । तानि यथा । तत्रादावृग्वेदीयं रुद्रसूक्तं ॥ ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहे मतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मिन्ननातुरं ॥ १ ॥ मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ २ ॥ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ॥ सुम्नाय-

न्निद्विशौअस्माकमाचरारिष्टवीराजुहवामतेहविः ॥ ३ ॥ त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे ॥ आरेअस्मद्दैव्यंहेळो-
अस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ ४ ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ॥ हस्ते बिभ्रद्भेषजावार्याणिशर्म-
वर्मच्छर्दिरस्मभ्यंयंसत् ॥ ५ ॥ ॥ १ ॥ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्द्धनं ॥ रास्वाचनोअमृतमर्तभोजनं
त्मनेतोकायतनयायमृळ ॥ ७ ॥ मानोमहान्तमुतमानोअर्भकंमानउक्षन्तमुतमानउक्षितं ॥ मानोवधीःपितरंमोतमातरंमानः
प्रियास्तन्वोरुद्ररीरिषः ॥ २ ॥ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतः
सदमित्वाहवामहे ॥ ३ ॥ उपतेस्तोमान्पशुपाइवाकंरास्वापितर्मरुतांसुम्नमस्मे ॥ भद्राहितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृणी
महे ॥ ४ ॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेअस्तु ॥ मृळाचनोअधिचब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हाः ॥ ५ ॥ अवो
चामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ ६ ॥ ॥ २ ॥
इतिशाकलाश्वलायनानां रुद्रसूक्तं ॥ ॥ अथवाजसनेयिनां ॥ ॐ "नमस्तेरुद्रमन्यव" इत्यादि "तमेषाञ्जम्भेदध्मः"
॥ ६६ ॥ इतिषट्षष्टिकंडिकःषोडशो रौद्रोऽध्यायः ॥ ॥ अथछंदोगानां ॥ ॐ आवोराजानमध्वरस्यरुद्रꣳ होतारꣳ सत्ययजꣳ
रोदस्योः ॥ अग्निंपुरातनयित्नो रचित्ताद्धिरण्यरूपमवसेकृणुध्वम् ॥१॥ तद्वोगायतेसुतेसचापुरुहूतायसत्वने ॥ शंयद्गवेनशाकिने
॥ २ ॥ ॥ मन्युनावृत्रहासूर्येणस्वराड्यज्ञेनमघवादक्षिणाऽप्रियातनूराज्ञाविशदाधारा ॥ वृषभस्त्वष्टावृत्रेणशचीपतिरन्नेनगयः
पृथिव्यास्त्रीणिकोऽग्निनाविश्वंभूतं ॥ अभ्यभवोवायुनाविश्वाःप्रजाअभ्यपवथावषट्कारेणार्धभाकासोमेनसोमपाःसमित्यापरमेष्ठी॥

येदेवादेवादिविषदःस्थतेभ्योवोदेवोदेवेभ्योनमः ॥ येदेवादेवाअंतरिक्षसदःस्थतेभ्योवोदेवोदेवेभ्योनमः ॥ येदेवादेवाःपृथिवी-
सदःस्थतेभ्योवोदेवोदेवेभ्योनमः ॥ येदेवादेवाऽअप्सुषदः स्थतेभ्योवोदेवोदेवेभ्योनमः ॥ येदेवादेवादिक्षुसदःस्थतेभ्योवोदेवो-
देवेभ्योनमः ॥ येदेवादेवाऽआशासदःस्थतेभ्योवोदेवोदेवेभ्योनमः ॥ अवज्यामिवधन्वनोवितेमन्युंनयामसिमृडतांनइहऽ-
अस्मभ्यंयऽइदंविश्वंभूतं ॥ ३ ॥ ॥ नमऽउततेभ्यश्चोतन्वानेभ्यश्च ॥ नमोनिषंगीभ्यश्चोपवीतिभ्यश्चनमोस्यन्द्भ्यश्चप्रतिदधाने-
भ्यश्चनमःप्रविभ्यश्चप्रविव्याधिभ्यश्चनमस्वारिभ्यश्चत्सारिभ्यश्चनमः श्रीतेभ्यश्चश्रायिभ्यश्चनमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयते-
चवियतेचनमःपथेचविपथायच ॥ अवज्यामिवधन्वनोवितेमन्युंनयामसिमृडतांनऽइहऽअस्मभ्यंयऽइदंविश्वंभूतं ॥४॥ ॥ नमोऽ-
न्नायनमोऽन्नपतयेएकाक्षायचावन्नादायचनमोनमः ॥ रुद्रायतीरंसदेनमःस्थिरायस्थिरधन्वनेनमः प्रतिपदायचपटरिणेचनम-
स्त्रियंबकायचकपर्दिनेचनमऽआश्रायेभ्यश्चप्रत्याश्रायेभ्यश्चनमः ऋव्येभ्यश्चविरिफेभ्यश्चनमःसंवृत्तेचविवृत्तेच ॥ अवज्यामिवध-
न्वनोवितेमन्युंनयामसिमृडतांनऽइहऽअस्मभ्यंयऽइदंविश्वंभूतं ॥५॥ ॥इतिकौथुमिछंदोगानांरुद्रसूक्तं॥ ॥ अथाथर्वणिकशौन-
कानां ॥ ॥शिवाथर्वशीर्षं नीलरुद्रसूक्तं वा ॥ शिवाथर्वशीर्षं कर्मकांडे द्रष्टव्यं ॥ ॥ अथनीलरुद्रसूक्तं ॥ ॐ अपश्यंत्वावरोहंतं-
दिवितःपृथिवीमिवं ॥ अपश्यमस्यंतंरुद्रंनीलंग्रीवंशिखंडिनं ॥ १ ॥ दिवउग्रोवारुक्षत्प्रत्यंष्ठाद्भूम्यामाधिं ॥ जनासःपश्यंतेमनीलंग्री-
वंविलोहितं ॥ २ ॥ एषरात्यंवीरहाद्रुद्रोजंलाषभेषजीः ॥ वीतेक्षेमंमनीनशद्वातीकारोप्यैतुतें ॥ ३ ॥ नमंस्तेभवभामायनमं-
स्तेभवमन्यवे ॥ नमंस्तेअस्तुबाहुभ्यामुतोतइषवेनमः ॥ ४ ॥ यामिषुंगिरिशंतहस्तेबिभर्ष्यस्तवे ॥ शिवांगिरित्रतांकृणुमाहिं-

सीतपुरुषान्मम ॥५॥ शिवेनवचसात्वागिरिशाच्छावदामसि ॥ यथानःसर्वमिज्जगदयक्ष्मंसुमनाऽअसत् ॥६॥ यातऽइषुःशिवत-
माशिवंबभूवतेधनुः॥ शिवाशरव्यायातवतयानोमृडजीवसे ॥७॥ यातेरुद्रशिवातनूरघोरापापकाशिनी॥ तयानस्तन्वाशंतमया-
गिरिशंताभिचाकशत् ॥८॥ असौयस्ताम्रोऽअरुणऽउतबभ्रुर्विलोहितः॥ येचेमेऽअभितोरुद्रादिक्षुश्रिताः सहस्रशोवैषांहेडऽईं-
महे ॥९॥ ॥अदृश्यंत्वावरोहंतंनीलग्रीवंविलोहितं॥ उतत्वागोपाऽअदृश्यंनुतत्वोदहार्यः॥ उतोत्वाविश्वाभूतानितस्मैदृष्टायतेनमः
॥ १ ॥ नमोऽस्तुनीलशिखंडाय सहस्राक्षायवाजिने ॥ अथोयेऽअस्यसत्वानस्तेभ्योऽहमकरन्नमः ॥ नमांसितऽआयुधायाना-
ततायधृष्णवे ॥ उभाभ्यामुततेनमोबाहुभ्यांतवधन्वने ॥ प्रमुंचधन्वनस्त्वमुभयोरार्त्न्योज्याम् ॥ याश्चतेहस्तऽइषवःपराताभगवो-
वप ॥ अवतत्यधनुस्त्वंसहस्राक्षशतेषुते ॥ निशीर्यशल्यानांमुखाशिवोनःसुमनाभव ॥ विज्यंधनुःकपर्दिनोविशल्योबा-
णवांऽउत ॥ अनेशन्नस्येषवःशिवोऽअस्यानिषंगतिः ॥ परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयऽइषुधिस्तवारेऽअस्मि-
न्निधेहितं ॥ यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयात्वं विश्वतोऽअस्मानयक्ष्मयापरिभुज ॥ नमोऽस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥
येऽअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ येवामीरोचनेदिवियेचसूर्यस्यरश्मिषु ॥ येषामप्सुषदस्कृतंतेभ्यःसर्पेभ्योनमः ॥ याऽ-
इषवोयातुधानानां येवावनस्पतींनां । येवावटेषुशेरतेतेभ्यःसर्पेभ्योनमः॥ यस्वजनानीलग्रीवोयस्वजनांहरीरुत ॥ कल्माषपुच्छमो-
षधेजंभयाश्चरुंधति ॥ बभ्रुश्चबभ्रुकर्णश्चनीलागलसालःशिवःपश्य ॥ सर्वेणनीलशिखंडेनभवेनमरुतांपिता ॥ विरूपाक्षेणबभ्रु-
णावाचंवदिष्यतोहतः ॥ सर्वेनीलशिखंडवीरकर्मणिकर्मणियऽइमामस्यप्राशंजहियोनेदंविभजामहै ॥ नमोभवायनमःशर्वायनमः

कुमाररात्रवैनमोनीलशिखंडायनमः सभाप्रपादिने ॥ यस्यहरीयऽअश्वतरौगर्दभावभितस्करौ॥ तस्मैनीलशिखंडायनमःसभाप्रपा-
दिनेनमःसभाप्रपादिनइति ॥ ॥ इत्याथर्वणिकशौनकानां रुद्रसूक्तं ॥ ॥ इति ऋग्यजुःसामाथर्वणिकानि चत्वारि रुद्रसूक्तानि ॥
अथ तथैव चत्वारि शांतिसूक्तानि ॥ ॥ तत्रादौ शाकलाश्वलायनानां ॥ ॥ ॐ शन्नइंद्राग्नीभवतामवोभिःशन्नइंद्रावरुणारात-
हव्या ॥ शमिंद्रासोमासुवितायशंयोःशन्नइंद्रापूषणावाजसातौ ॥ १ ॥ शन्नोभगःशमुनःशंसोअस्तुशन्नःपुरंधिःशमुसंतु-
रायः ॥ शन्नःसत्यस्यसुयमस्यशंसःशन्नोअर्यमापुरुजातोअस्तु ॥ २ ॥ शन्नोधाताशमुधर्तानोअस्तुशंनउरूचीभवतुस्वधाभिः ॥
शंरोदसीबृहतीशन्नोअद्रिःशन्नोदेवानांसुहवानिसंतु ॥ ॥ ३ ॥ शन्नोअग्निर्ज्योतिरनीकोअस्तुशन्नोमित्रावरुणावश्विनाशं ॥
शन्नःसुकृतांसुकृतानिसंतुशंनइषिरोअभिवातुवातः ॥ ४ ॥ शन्नोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोअस्तु ॥ शन्नओष-
धीर्वनिनोभवंतुशन्नोरजसस्पतिरस्तुजिष्णुः ॥ ५ ॥ ॥ १ ॥ शन्नइंद्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः ॥
शंनोरुद्रोरुद्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहशृणोतु ॥ १ ॥ शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसंतुयज्ञाः ॥ शंनःस्व-
रूणांमितयोभवंतुशन्नःप्रस्वः१ःशम्वस्तुवेदिः ॥ २ ॥ शन्नःसूर्यउरुचक्षाउदेतुशंनश्चतस्रःप्रदिशोभवंतु ॥ शंनःपर्वताध्रुवयोभ-
वंतुशंनःसिंधवःशमुसंत्वापः ॥ ३ ॥ शन्नोअदितिर्भवतुव्रतेभिःशन्नोभवंतुमरुतःस्वर्काः ॥ शंनोविष्णुःशमुपूषानोअस्तुशंनो-
भवित्रंशम्वस्तुवायुः ॥ ४ ॥ शंनोदेवःसवितात्रायमाणःशंनोभवंतूषसोविभातीः ॥ शंनःपर्जन्योभवतुप्रजाभ्यःशंनःक्षेत्रस्यपति-
रस्तुशंभुः ॥ ५ ॥ ॥ २ ॥ शंन्नोदेवाविश्वेदेवाभवन्तुशंसरस्वतीसहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचःशंनोदि-

व्याःपार्थिवाःशंनोअप्याः ॥ १ ॥ शंनःसत्यस्यपतयोभवंतुशंनोअर्वंतःशमुसंतुगावः ॥ शन्नऋभवःसुकृतःसुहस्ताःशंनोभवंतु-पितरोहवेषु ॥ २ ॥ शन्नोअजएकपाद्देवोअस्तुशंनोऽहिर्बुध्न्यः १ शंसमुद्रः ॥ शन्नोअपान्नपात्पेरुरस्तुशंनःपृश्निर्भवतुदेव-गोपा ॥ ३ ॥ आदित्यारुद्रावसवोजुषंतेदंब्रह्मक्रियमाणंनवीयः ॥ शृण्वंतुनोदिव्याःपार्थिवासोगोजाताउतयेयज्ञियासः ॥ ४ ॥ येदेवानांयज्ञियायज्ञियानांमनोर्यजत्राअमृताऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ ५ ॥ ॥ ३ ॥ इति शाकलाश्वलायनानां शांतिसूक्तं ॥ ॥ अथ वाजसनेयिनां ऋचंवाचंप्रपद्यइत्यादिः शतंभूयश्चशरदःशतादित्यंतश्चतु-र्विंशतिकंडिकः २४ षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥

॥ अथ कौथुमिछंदोगानां ॥ ॥ ॐअबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं ॥ यह्वाइवप्रवयामुज्जिहानाः प्रभानवःसिस्रतेनाकमच्छ ॥ १ ॥ महित्रीणामवरस्तुद्युक्षंमित्रस्यार्यम्णः ॥ दुराधर्षंवरुणस्य ॥ २ ॥ त्वावतःपुरुवसोवयमिंद्र प्रणेतः ॥ स्मसिस्थातर्हरीणां ॥ ३ ॥ इंद्रंनरोनेमधिताहवंतेयत्पार्यायुनजतेधियस्ताः ॥ शूरोनृषाताशवसश्चकानआगोमतिव्रजे-भजात्वंनः ॥ ४ ॥ त्यमूषुवाजिनंदेवजूतꣳसहावानंतरुतारꣳरथानां ॥ अरिष्टनेमिंपृतनाजमाशुꣳस्वस्तयेतार्क्ष्यमिहाहुवेम ॥५॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ हुवेनुशक्रंपुरुहूतमिन्द्रमिदꣳस्वस्तिनोमघवाऽवत्विन्द्रः ॥ ६ ॥ सोमः-पुनानऊर्मिणाव्यंवारंविधावति ॥ अग्रेवाचःपवमानःकनिक्रदत् ॥ ७ ॥ सासुन्वेयोवसूनांयोरायामानेतायइडानांसोमः ॥ यःसुक्षितानः ॥ ८ ॥ विश्वतोदावन्विश्वतोनआभर ॥ यंत्वाशविष्ठमीमहे ॥ ९ ॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳ

श्चथाय ॥ अथादित्यव्रतेनवयंतावानागसोअदितयेसियाम ॥ १० ॥ इति कौथुमिछंदोगानां शांतिसूक्तं ॥ ॥ अथाथर्वणिकशौनकानां शांतिसूक्तं ॥ ॥

ॐ शन्नइंद्राग्नीभवतामवोभिःशन्नइंद्रावरुणारातहव्या ॥ शमिंद्रासोमासुवितायशंयोःशन्नइंद्रापूषणावाजसातौ ॥ १ ॥ शन्नोभगःशमुनःशंसोअस्तुशन्नःपुरंधिःशमुसंतुरायः ॥ शंनःसत्यस्यसुयमस्यशंसःशन्नोअर्यमापुरुजातोअस्तु ॥ २ ॥ शन्नोधाताशमुधर्तानोअस्तुशन्नउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशन्नोअद्रिःशन्नोदेवानांसुहवानिसंतु ॥ ३ ॥ शन्नोअग्निर्ज्योतिरनीकोअस्तुशन्नोमित्रावरुणावश्विनाशं ॥ शन्नःसुकृतांसुकृतानिसंतुशन्नइषिरोअभिवातुवातः ॥ ४ ॥ शन्नोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोअस्तु ॥ शन्नओषधीर्वनिनोभवंतुशन्नोरजसस्पतिरस्तुजिष्णुः ॥ ५ ॥ शन्नइंद्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः ॥ शन्नोरुद्रोरुद्रेभिर्जलाषःशन्नस्त्वष्टाग्नाभिरिहशृणोतु ॥ ६ ॥ शन्नःसोमोभवतुब्रह्मशन्नःशन्नोग्रावाणःशमुसंतुयज्ञाः ॥ शन्नःस्वरूणांमितयोभवंतुशन्नःप्रस्वः शम्वस्तुवेदिः ॥ ७ ॥ शन्नःसूर्यउरुचक्षाउदेतुशन्नोभवंतुप्रदिशश्चतस्रः ॥ शन्नःपर्वताध्रुवयोभवंतुशन्नःसिंधवःशमुसंत्वापः ॥ ८ ॥ शन्नोअदितिर्भवतुव्रतेभिःशनोभवंतुमरुतस्वर्काः ॥ शन्नोविष्णुःशमुपूषानोअस्तुशन्नोभवित्रंशम्वस्तुवायुः ॥ ९ ॥ शन्नोदेवःसवितात्रायमाणःशन्नोभवंतुषसोविभातीः ॥ शन्नःपर्जन्योभवतुप्रजाभ्यःशन्नःक्षेत्रस्यपतिरस्तिशंभुः ॥ १० ॥ ॥ १ ॥

ॐ शन्नःसत्यस्यपतयोभवंतुशन्नोअर्वतःशमुसंतुगावः ॥ शन्नऋभवःसुकृतःसुहस्ताःशन्नोभवंतुपितरोहवेषु ॥ १ ॥ शन्नो-

देवाविश्वेदेवाभवंतुशंसरस्वतीसहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचःशन्नोदिव्याःपार्थिवाःशन्नोअप्याः ॥ २ ॥ शन्नोअजएकपाद्देवोअस्तुशन्नोहिर्बुध्न्यः १ शंसमुद्रः ॥ शन्नोअपांनपात्पेरुरस्तुशंनःपृश्निर्भवतुदेवगोपा ॥ ३ ॥ आदित्यारुद्रा-वसवोजुषमिदंब्रह्मक्रियमाणंनवीयः ॥ शृण्वंतुनोदिव्याःपार्थिवासोगोजाताउतयेयज्ञियासः ॥ ४ ॥ येदेवानामृत्विजोयज्ञिया-सोमनोर्यजत्राअमृतांऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ ५ ॥ ॥ २ ॥

ॐ शांताद्यौःशांतापृथिवीशांतमिदमुर्व १ तरिक्षं ॥ शांताउदन्वतीरापःशांतानःसंत्वोषधीः ॥ १ ॥ शांतानिपूर्वरूपाणि-शांतंनोअस्तुकृताकृतं ॥ शांतंभूतंचभव्यंचसर्वमेवशमस्तुनः ॥ २ ॥ इयंयापरमेष्ठिनीवाग्देवीब्रह्मसंशिता ॥ ययैवससृजेघोरं-तयैवशांतिरस्तुनः ॥ ३ ॥ इदंयत्परमेष्ठिनंमनोवांब्रह्मसंशितं ॥ येनैवससृजेघोरंतेनैवशांतिरस्तुनः ॥ ४ ॥ इमानियानिपंचें-द्रियाणिमनःषष्ठानिमेहृदिब्रह्मणासंशितानि ॥ यैरेवससृजेघोरंतैरेवशांतिरस्तुनः ॥ ५ ॥ शनोमित्रःशंवरुणःशंविष्णुःशंप्रजा-पतिः ॥ शन्नइंद्रोबृहस्पतिःशन्नोभवत्वर्यमा ॥ ६ ॥ शन्नोमित्रःशंवरुणःशंविवस्वाञ्छमंतकः ॥ उत्पाताःपार्थिवांऽतरिक्षाः शंनोदिविचराग्रहाः ॥ ७ ॥ शन्नोभूमिर्वेप्यमानाःशमुल्कानिर्हतंचयत् ॥ शंगावोलोहितक्षीराःशंभूमिरवतीर्यतीः ॥ ८ ॥ नक्षत्रमुल्काभिहतंशमस्तुनःशंनोऽभिचाराःशमुसंतुकृत्याः ॥ शन्नोनिखाताबल्गाःशमुल्कादेशोपसर्गाःशमुनोभवंतु ॥ ९ ॥ शन्नोग्रहाश्चांद्रमसाःशमादित्यःशंराहुणा ॥ शन्नोमृत्युर्धूमकेतुःशंरुद्रास्तिग्मतेजसः ॥ १० ॥ शंरुद्राःशंवसवःशमादित्याः शमग्नयः ॥ शन्नोमहऋषयोदेवाःशंदेवाःशंबृहस्पतिः ॥ ११ ॥ ब्रह्मप्रजापतिर्धातालोकावेदाःसप्तऋषयोऽग्नयः ॥ तैर्मेकृतंस्व-

स्त्ययंनमिंद्रोमेशर्मयच्छतुब्रह्मामेशर्मयच्छतु ॥ १२ ॥ विश्वेमेदेवाःशर्मयच्छंतुसर्वेमेदेवाःशर्मयच्छंतु ॥ यानिकानिचिच्छांतानिलोकेसप्तऋषयोविदुः ॥ सर्वाणिशंभवंतुशंमेअस्त्वभयंमेअस्तु ॥ १३ ॥ पृथिवीशांतिरंतरिक्षंशांतिर्द्यौःशांतिरापःशांतिरोषधयःशांतिर्वनस्पतयःशांतिर्विश्वेमेदेवाःशांतिःसर्वेमेदेवाःशांतिःशांतिःशांतिभिः ॥ ताभिःशांतिभिःसर्वशांतिभिःशमयामोऽहंयदिहघोरंयदिहक्रूरंयदिहपापंतच्छांतंतच्छिवंसर्वमेवशमस्तुनः ॥ १४ ॥ ॥ ३ ॥

इत्यथर्वणशौनकानां शांतिसूक्तं ॥ ॥ इति चत्वारि शांतिसूक्तानि ॥ ४ ॥ प्रधानहोमांते उत्तरांगानि ॥ पूजास्विष्ट० विसर्जनं ॥ १ ॥ अभिषेकांते आज्यावलोकनं ॥ सदक्षिणं तद्दानंच । हिरण्यमेकैका धेनुश्चेति प्रत्यृत्विजं शांत्यंगदक्षिणादानं ॥ असंभवे मूल्याध्यायोक्तं तन्मूल्यं वा ॥ रात्रौ शांतिसूक्तपाठश्चेति विशेषः ॥ ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे शांतिककांडे त्रिकप्रसवजननशांतिप्रयोगः ॥ ॥ ४ ॥

अथ सूर्यचंद्रग्रहणजननशांतिः ॥ ग्रहणे चंद्रसूर्यस्य प्रसूतिर्यदि जायते । चंद्रसूर्ययोरित्यर्थः । व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् । तदा व्याधिपीडा जायते इति पूर्वोत्तरान्वयि । तुना निमित्तांतरं । स्त्रीणामादौ ऋतुदर्शनात् प्रथमरजोदर्शनात्तु व्याधिपीडा जायते इत्यर्थश्च । अन्यदुष्टफलमाह । व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् । व्याधिपीडा इति पौनरुक्त्या महती व्याधिपीडा द्योत्यते । निमित्तद्वये शांतिमाह । शांतिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया । ग्रहणकाले जन्मनि प्रथमऋतुदर्शनेचैवेयं । वेधकाले जन्मनि नैव शांतिः । किंतु दुष्टकालत्वाद्रुद्राभिषेकः ।

यस्मिन्नृक्षे विशेषेण ग्रहणं संप्रजायते । तदृक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत् । यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् । सूर्यग्रहे सूर्यरूपं हिरण्येन स्वशक्तितः । चंद्रं चंद्रग्रहे धीमान् राजतेन विशेषतः । राहो रूपं प्रकुर्वीत नागेनैव विचक्षणः । नागेन सीसकेन । शुचौ देशे प्रयत्नेन गोमयेनोपलेपयेत् । तस्योपरि न्यसेद्धीमान्नवं वस्त्रं सुशोभनं । त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् । नात्र कलशप्रतिष्ठापनं । शांतिसामान्यात्कार्यमित्यन्ये । रक्ताक्षता रक्तगंधरक्तपुष्पांबराणि च । सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरं च यत् । श्वेतवस्त्रं श्वेतमाल्यं श्वेतगंधाक्षतादिभिः। चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकरं च यत् । राहवे चैव दातव्यं कृष्णपुष्पांबराणि च । दद्यान्नक्षत्रनाथाय श्वेतगंधानुलेपनं । सूर्यं संपूजयेद्धीमानाकृष्णेनेति मंत्रतः । चंद्रग्रहे तथा सम्यगाप्यायस्वेति मंत्रतः । स्वर्भानोरिति मंत्रेण राहुं यत्नेन पूजयेत् । कयानश्चित्र इति राहोर्मंत्रः काती-यानां । एवं संपूजयेद्धीमान्समिद्भिश्चार्कसंभवैः । सूर्यग्रहे इत्यर्थः । चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः । दूर्वाभिर्जु-हुयाद्धीमान् राहोः संप्रीणनाय च । समिद्भिर्ब्रह्मवृक्षोत्थैर्भेशाय जुहुयाद्बुधः । ब्रह्मवृक्षः पलाशवृक्षः । जलवृक्षस्येति पाठांतरं-कौस्तुभे । जलवृक्षाः औदुंबरजंबूपलाशादयः । भेशाय नक्षत्राधिपतये । आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः । तिसृभ्यो देवताभ्य इत्यर्थः । पंचगव्यैः पंचरत्नैः पंचत्वग् पंचपल्लवैः । जलैरौषधिकल्कैश्च सहितैः कलशोदकैः । औषधिकल्कैः सर्वौष-धिकल्कैः । अभिषेकं प्रकुर्वीत यजमानं प्रयत्नतः । मंत्रैर्वारुणदैवत्यैरापोहिष्ठादिभिस्त्रिभिः । इमम्मेगंगे पितरस्तत्त्वायामी-तिमंत्रकैः । पितरः । पितरः पितामहाः परेऽवरे इति शुक्लयाजुषपारस्करगृह्योक्तो मंत्रः । अभिषेके निवृत्ते तु यजमानः

समाहितः । आचार्यं पूजयेत्पश्चात्सुशांतो विजितेंद्रियः । तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयम् । प्रतिकृतिः प्रतिमा । दक्षिणाभिश्च संयुक्तं यथाशक्त्यनुसारतः । ब्राह्मणान् भोजयित्वा तु प्रणिपत्य क्षमापयेत् । तेभ्योपि दक्षिणां दद्याद्यजमानः समाहितः । अनेन विधिना शांतिं कृत्वा सम्यग्विशेषतः । अकालमृत्युं शोकं च व्याधिपीडां नचाप्नुयात् । सौख्यं सौमनसं नित्यं सौभाग्यं लभते नरः । इत्थं ग्रहणजातानां सर्वारिष्टविनाशनं । कथितं भार्गवेणैव शौनकाय महात्मने ॥ इति भार्गवोक्ता शौनकविरचिता सूर्यचंद्रग्रहणजननशांतिः । स्त्रीणां ग्रहणे प्रथमरजोदर्शने शांतिश्च ॥

अथप्रयोगः । ग्रहणे जनने त्वादौ गोमुखप्रसवः । रजोदर्शने तु न सः ॥ ततः ममास्य शिशोः सूर्यग्रहणकाले चंद्रग्रहणकाले जननसूचितसर्वारिष्टनिरसनद्वारा सौख्यसौभाग्यसौमनसफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीतये भार्गवोक्तां सग्रहमखां सूर्य-चंद्र-ग्रहणजननशांतिं करिष्ये । इति संकल्प्य । मम भार्यायाः ग्रहणे प्रथमरजोदर्शनसूचितसर्वारिष्टेत्यादिविशेषः । अन्यत् ग्रहणजननशांतिवत् ॥ गणपतिपूजनादिअग्निप्रतिष्ठापनांतं । अग्नेः पूर्वतो गोमयोपलिप्तायां रंगवल्ल्याद्यलंकृतायां वेदिकायां भूमौ वा । यथाविधि कलशं प्रतिष्ठाप्य । न वा । तदुपरि नवं सदशं सुशोभनं वस्त्रं प्रसार्य । तत्र सूर्यग्रहे मध्ये । सौवर्णप्रतिमायां सूर्यं १ सूर्यदक्षिणतः सीसकप्रतिमायां राहुं २ सूर्यस्योत्तरतः सौवर्णप्रतिमायां ग्रहणकालीननक्षत्रदेवतां च अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं प्रतिष्ठाप्य । आवाह्य । ध्यात्वा च । ॐ आकृष्णेनेतिमंत्रेण सूर्यमारक्तवस्त्रगंधाक्षतपुष्पैः । ॐकयानश्चित्रइतिमंत्रेण राहुं कृष्णवस्त्रगंधाक्षतपुष्पैः । ॐ नक्षत्रदेवतामंत्रेण नक्षत्रदेवतां श्वेतवस्त्रगंधाक्षतपुष्पैः । षोडशोपचारैः पूजयेत् । चंद्रग्रहे तु मध्ये

राजतप्रतिमायां ॐआप्यांयस्वेतिमंत्रेण चंद्रं श्वेतवस्त्रगंधाक्षतपुष्पैः पू० । तद्दक्षिणतः पूर्ववद्राहुं । उत्तरतो नक्षत्रदेवतां च पू० दितिविशेषः । अन्यत्पूर्ववत् । ततो ग्रहप्रतिष्ठापनं रुद्रकलशस्थापनांतं । ततो दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि । चरुं श्रपयित्वा । आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । तत्र होमद्रव्याणि । सूर्यग्रहे सूर्यस्यार्कसमिधः । चंद्रग्रहे चंद्रस्य पालाश्यः समिधः । राहोर्दूर्वाः । नक्षत्रदेवतायाः पालाश्यः समिधः । आज्यं । चरुः तिलाश्चेति त्रीणि-सर्वेषां । प्रत्येकं प्रतिद्रव्यमष्टोत्तरशतमष्टाविंशति वा १०८।२८ होमसंख्या । होममंत्राः पूजोक्ता एव । इदᳪसूर्यायन० १ इदᳪराहवेन० २ इदंचंद्रायन० ३ इतित्यागाः । । तत उत्तरपूजनाद्याचार्यपूजनांते । पंचगव्यपंचरत्नपंचत्वक्पंचपल्लव-सर्वौषधिकल्कमिश्रितलौकिककलशोदकैः ग्रहकलशोदकेनचाभिषेकः । तन्मंत्राः । आपोहिष्ठेति तिस्रः ३ इमंमेगंगे० १ पितरः पितामहाः परेवरेत० इति सौत्रो मंत्रः । इमम्मे इत्यादयोऽष्टौ वारुणमंत्राः । स्नानं । आज्याव० । तद्दानं च । विसर्जनं । ब्राह्मणभोजनं च ॥ इति शुक्लयजुःशाखीयकर्म्मकांडप्रदीपे शांतिकक्कांडे ग्रहणजननशांतिप्रयोगः । ग्रहणे स्त्रीप्रथमरजोदर्शनशांतिप्रयोगश्च ॥ ॥

अथ सिंहार्के गोःप्रसूतौ । पौषेमासे बुधवासरे च महिषीप्रसूतौ। दिवा अश्वतरीप्रसूतौ । श्रावणे मासि दिवा अश्विनी-प्रसूतौ । पौषे मासि भार्याप्रथमप्रसूतौ च शांतिः ॥ शौनकः । सिंहे तु गावो महिषी तु माघे नभे तु मासे वडवाप्रसूतिः । पौषे तु भार्याप्रथमप्रसूतिः कृत्वा तु शांतिं स्वगृहेऽश्नुते शम् । सिंहे सिंहार्के । तथाच नारदः । भानौ सिंहगते चैव यस्य

गौः संप्रसूयते। मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशय इति । । महिषी तु माघे। नभे तु मासे इति। प्रथमर्तुना पौषो मासः द्वितीयर्तुना बुधवासरश्च दिवसः । वडवाअश्विनी वडवाअश्वतर्युपलक्षणं। तथाच गार्ग्ये परिशिष्टे। माघे बुधे च महिषी श्रावणे वडवा दिवा। सिंहे गावः प्रसूयंते स्वामिनो मृत्युदायकाः। तथाच निर्णयसिंधौ । सिंहराशौ गते सूर्ये गोप्रसूतिर्यदा भवेत्। पौषे च महिषी सूते दिवैवाश्वतरी तथा। तदाऽनिष्टं भवेत्किंचित्तच्छांत्यै शांतिकं चरेत्। तथा धर्मनौकायां। गावो महिष्यश्वतर्यश्विनी सिंहे रवौ तथा। सहस्यमाघयोरह्नि श्रावणेऽह्निच सूयते इति । अत्र क्रमादिति ग्राह्यं । सहस्यः पौषः। श्रावणिरिकारांतः। श्रावणः। तत्स्वामिमृत्युः किल तेन जायते तद्दोषशांत्यै किल शांतिकं चरेदिति। पौषे त्विति ॥ सिंहे च गावो महिषी च माघे नभे तु मासे वडवा दिवा च। स्त्रियश्च पौषप्रथमप्रसूता दद्याद्द्विजेभ्यश्च सदक्षिणास्ताः इति नारदः ॥ अथ शांतिं प्रवक्ष्यामि शौनकोहं द्विजातयः। शुभेऽह्नि कुर्याद्विधिवदात्मनः सुखमश्नुते। अकुर्वाणोऽथ शांतिं च महद्दुःखमवाप्नुयात्। कृत्वा स्नानं समभ्यर्च्य आत्मनः कुलदेवतां। स्वस्तिवाचनपूर्वं च ब्राह्मणानर्चयेदथ। अष्टौ चत्वारि शक्त्या वा पूजयेद्विधिपूर्वकं। गृहस्येशानदिग्भागे व्रीहिराशिं च कारयेत्। सौवर्णं राजतं ताम्रं कलशं स्थापयेत्ततः। ततो होमं

१-सिंहार्कादौ प्रथमप्रसूता गवाद्या द्विजेभ्यः सदक्षिणा दद्यादित्यर्थः। तत्र "स्वदाने सर्वमविशेषात्"-"यस्य वा प्रभुः स्यादितरस्याशक्यत्वात्" इति विश्वजिति पित्रादीनामदेयत्वाधिकरणे ६। ७। १। १-२। स्वत्वत्यागपूर्वकंहिपरस्वत्वापादनंदानं। स्वशब्दोऽत्रधनवाची । न ज्ञातिरात्माऽऽत्मीयं वा। प्रभुः स्वामी । तथाच यत्रैव प्रभुत्वयोगेन स्वामित्वं तदेव देयं । तस्माद्धन एव दानाधिकारो न पितृमातृभार्यादिज्ञातिरूपे । इति सिद्धांतानुसारेण भार्यादानमस्वामिकधनत्वेन ज्ञातिरूपत्वेनचादेयत्वान्नविधेयमितिध्येयम्। गवादिदानं तु विधेयमेवाविशेषादिति निर्णयः।

प्रकुर्वीत शुद्धदेशे समाहितः । मूर्तिद्वयं प्रकुर्वीत रुद्रसूर्यौ प्रयत्नतः । सौवर्णौ राजतौ कार्यौ ताम्रलोहमयौ तथा । ततोऽ-ग्निस्थापनं कृत्वा ग्रहयज्ञं समारभेत् । अन्वाधानं ततः कृत्वा चरुनिर्वपणं तथा । कुंभं स्पृष्ट्वा ऋत्विजश्च वस्त्रयुग्मेन वेष्टयेत् । निक्षिपेत्पल्लवान्पंच पंचत्वक् प्रक्षिपेत्तथा । सर्वौषधीः सप्तमृदः पुण्यतीर्थेन पूरयेत् । कलशोपरि संस्थाप्य तत्तन्मंत्रैश्च पूज-येत् । ऋत्विजश्च ततो जप्त्वा रुद्रसूक्तानि सौरशः । रुद्रसूक्तानीति बहुत्वं ऋग्यजुःसामाथर्वणिकापेक्षं । तानिच त्रिकप्रस-वशांतौ द्रष्टव्यानि । सौरशः । सार्वविभक्तिकःशस् । रुद्रसूक्तवच्चत्वारि ऋग्यजुःसामाथर्वणिकानि सौरसूक्तानीत्यर्थः । प्रयोगे तान्युच्यंते । अथवा मूलमंत्रं च यावद्धोमं समापयेत् । ततो होमं प्रकुर्वीत तिलाज्यचरुणा तथा । कद्रुद्रायेति मंत्रेण आकृष्णेनेति मंत्रतः । अष्टोत्तरशतं चाथ अष्टाविंशति वा तथा । प्रतिद्रव्यं प्रतिमंत्रेण जुहुयादित्यर्थः । कुर्याच्च विधिवद्धोमं गां च दद्यात्पयस्विनीं । कलशोदकमादाय ततोऽभिषेकमादरात् । समुद्रज्येष्ठादिभिर्मंत्रैः सुरास्त्वादि-पुराणतः । ऋत्विग्भ्यश्च ततो दद्याद्यथाशक्त्या च दक्षिणां । ब्राह्मणान् भोजयेत्पश्चाच्छतमष्टोत्तरं तथा । शक्त्या वा भोज-येच्चैवं दक्षिणाभिस्तु तोषयेत् । अनेन विधिना कुर्याच्छांतिकं तु द्विजोत्तमाः । तस्यारिष्टानि शाम्यंति स्वगृहे सुखमश्नुते । इति शौनकः ॥ शांत्यंतराणि निर्णयसिंधौ । अद्भुतसागरे नारदः । भानौ सिंहगते चैव यस्य गौः संप्रसूयते । मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः । तत्र शांतिं प्रवक्ष्यामि येन संपद्यते शुभं । प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् । ततो होमं प्रकुर्वीम घृताक्तै राजसर्षपैः । आहुतीनां घृताक्तानामयुतं जुहुयात्ततः । व्याहृतिभिश्चायं होमः । अयुतं दशसहस्रं

१०००० ॥ राजसर्षपाः (पांढरीमोहरी) । सोपवासः प्रयत्नेन दद्याद्विप्रायदक्षिणां ॥ तथा । सिंहराशौ गते सूर्ये गोप्रसूतिर्यदा भवेत् । पौषे च महिषी सूते दिवैवाश्वतरी तथा । तदाऽनिष्टं भवेत्किंचित्तच्छांत्यै शांतिकं चरेत् । अस्य वामेतिसूक्तेन तद्विष्णोरितिमंत्रतः । जुहुयाच्च तिलाज्येन शतमष्टोत्तराधिकं । मृत्युंजयविधानेन जुहुयाच्च तथाऽयुतम् । श्रीसूक्तेन ततः स्नायाच्छांतिसूक्तेन वा पुनः । मध्यरात्रे निशीथे वा यदा गौः क्रंदते सदा । ग्रामे वा स्वगृहे वापि शांतिकं पूर्ववद्विशेदिति ॥ अथर्ववेदिनां गार्ग्यपरिशिष्टेच । माघे बुधे च महिषी श्रावणे वडवा दिवा । सिंहे गावः प्रसूयंते स्वामिनो मृत्युदायकाः । विधानं तत्र कर्तव्यं नरेण हितमिच्छता । सौरैः सूक्तैः प्रकर्तव्यो होमः सूर्यस्य तुष्टये । प्रधानं तिलसर्पिश्च पायसं शर्करायुतं । सहस्रं हवनं प्रोक्तं दानान्यष्टौ यथाविधि । प्रत्यृचं पायसं हुत्वा तां गां विप्राय दापयेत् । अष्टौदानानि । तिलं लोहं हिरण्यं च कार्पासं लवणं तथा । सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतं । इति अथर्वोक्ता अमृताख्या शांतिश्च ।

अथ प्रयोगः ॥ नात्र गोमुखप्रसवः । मम भार्यायाः पौषेमासि प्रथमप्रसूतिसूचितव्याधिपीडामहदुःखनिरसनद्वारा श्रीपर० शौनकोक्तां सग्रहमखां पौषे भार्याप्रथमप्रसूतिनिमित्तां शांतिं करिष्ये ॥ सिंहार्के गोप्रसूतिनिमित्ता-

१-ऋ. अ. २ व. २३ अनु. २२ मंत्राः ५२ । २-अग्निपुराणे । त्रिषष्ट्यधिकद्विशततमेऽध्याये २६३ । श्रीसूक्तं प्रतिवेदं च ज्ञेयं लक्ष्मीविवर्द्धनं ॥ हिरण्यवर्णाहरिणीमृचः पंचदशश्रियः ॥ १ ॥ रथेअश्वेषु वृषभस्य वाजेति चतस्रो यजुषि श्रियः ॥ यजुषि कृष्णयजुर्वेदे । २ । ७ । ७ । १-४ । स्रावंतीयं तथा साम श्रीसूक्तं सामवेदके ॥ २ ॥ श्रियं धातर्मयि धेहि प्रोक्तमाथर्वणे तथा ॥ ३ ॥ इति ॥

तथा भार्याप्रथमप्रसूतिनिमित्तां शांतिं करिष्ये । इति संकल्पः ॥ गणपतिपूजनादि अग्निप्रतिष्ठापनांतं । अग्नेरीशाने व्रीहि-राशौ सौवर्णं राजतं ताम्रं वा कलशं यथाविधि प्रतिष्ठाप्य । पूर्णपात्रे सुवर्णरजतताम्रलोहान्यतरप्रतिमयोः अग्न्युत्तारण-प्राणप्रतिष्ठापूर्वकं क्रमेण रुद्रं सूर्यं च प्रतिष्ठाप्य । आवाह्य ध्यात्वा च । ॐ त्र्यंबकं० ॐ आकृष्णेनेतिमंत्रेण च यथाक्रमं रुद्रं सूर्यं च षोडशोपचारैः संपूजयेत् । ग्रहप्रतिष्ठापनं । रुद्रकलशप्रतिष्ठापनं । ततो दक्षिणतो ब्रह्मासनास्तरणादि । चरुं श्रपयित्वा । आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । तत्रतिलाज्यचरुमिश्रितप्रत्येकंद्रव्यं । प्रतिद्रव्यं अष्टोत्तरशतमष्टाविंशति वा होमसंख्या । होममंत्रौ पूजोक्तौ । होमसमये । रुद्रकुंभे चतुर्णां ऋग्यजुःसामाथर्वणिकानां रुद्रसूक्तानां जपः । तानि च सूक्तानि त्रिकप्रसवशांतौ द्रष्टव्यानि । सूर्यकुंभे । सर्वसौरजपः । तत्रादौ शाकलाश्वलायनानां प्रथमं सौरं । उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य, कण्वपुत्रः प्रस्कण्वः नवाद्या गायत्र्यः, अंत्याश्चतस्रोऽनुष्टुभः, सूर्यो देवता, सौरकुंभे जपे विनियोगः ॥ ॐ उदुत्यंजातवेदसंदेववंहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ १ ॥ अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सूरायविश्वचक्षसे ॥ २ ॥ अदृश्रमस्यकेतवोविरश्मयोजनाँअनु ॥ भ्राजंतोअग्नयोयथा ॥३॥ तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमाभा-सिरोचनं ॥ ४ ॥ प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ ५ ॥ ॥ १ ॥ ॥ येनापावकचक्ष-साभुरण्यंतंजनाँअनु ॥ त्वंवरुणपश्यसि ॥ १ ॥ विद्यामेषिरजस्पृथ्वहामिमानोअक्तुभिः ॥ पश्यंजन्मानिसूर्य ॥ २ ॥ सप्तत्वा-हरितोरथेवहंतिदेवसूर्य ॥ शोचिष्केशंविचक्षण ॥ ३ ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः ॥ ताभिर्यातिस्वयुक्तिभिः ॥ ४ ॥

उद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ ५ ॥ उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ॥ हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ ६ ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ ७ ॥ उदगादयमादित्योविश्वेनसहसासह ॥ द्विषंतंमह्यंरंधयन्मोऽअहंद्विषतेरधं ॥ ८ ॥ इति शाकलाश्वलायनानां प्रथमं सौरं ॥ १ ॥ वाजिनां ॥ ॐ विभ्राड्बृहत्पिबत्वित्यादिराकृष्णेनरजसेत्यंतः सप्तदशर्चोऽनुवाकः ॥ अ० ३३ । कं ३०-४३ ॥ तथा चानुवाकपरिशिष्टं । "विभ्राट्चतुर्दश" इति । सर्वानुक्रमश्च । "सूर्यस्तुत्युक्थ्ये तृतीयेऽहनि सौर्यश्चतुर्दशपुरोरुचस्तिस्रश्च-प्रतीकोक्ताः" इति ॥ ॥ इति कातीयानां सौरं ॥ २ ॥ अथ कौथुमिछंदोगानां सौरं ॥ ॐ आयंतइवसूर्यविश्वेदिंद्रस्यभक्षत ॥ वसूनिजातेजनिमान्योजसाप्रतिभागंनदीधिमः ॥ १ ॥ विभ्राड्बृहत्पिबतुसोम्यंमध्वायुर्दधद्यज्ञपतावविह्रुतं ॥ वातजूतोयोअभिरक्षतितमनाप्रजाःपिपर्तिबहुधाविराजति ॥ २ ॥ विभ्राड्बृहत्सुभृतंवाजसातमंधर्मन्दिवोधरुणेसत्यमर्पितं ॥ अमित्रहावृत्रहादस्युहंतमंज्योतिर्जज्ञेअसुरहासपत्नहा ॥ ३ ॥ इदंश्रेष्ठं ज्योतिषांज्योतिरुत्तमंविश्वजिद्धनजिदुच्यतेबृहत् ॥ विश्वभ्राड्भ्राजोमहिसूर्योदृशउरुपप्रथेसहओजोअच्युतं ॥ ४ ॥ बण्महाँ असिसूर्यबडादित्यमहाँअसि ॥ महस्तेसतोमहिमापनिष्टममन्हादेवमहाँअसि ॥ ५ ॥ बट्सूर्यश्रवसामहाँअसिसत्रादेवमहाँअसि ॥ महादेवानामसुर्यःपुरोहितोविभुज्योतिरदाभ्यम् ॥ ६ ॥ ॥ इति कौथुमिछंदोगानां सौरं ॥ ३ ॥ अथ शौनकीयाथर्वणानां सौरं ॥ तच्च सूर्याथर्वशीर्षे कर्मकांडे द्रष्टव्यं ॥ ४ ॥ इति चत्वारि ऋग्यजुःसामाथर्वणिकानि सौराणि ॥ ४ ॥ अथवा यावद्धोमं तत्तन्मूलमंत्रजपः । उत्तरपूजादि विसर्जनांतं । तत्र

गोदानं । तिला लोहा हिरण्यं च कार्पासं लवणं तथा । सप्तधान्यं क्षितिगौश्चेति अष्टौ दानानि । सदक्षिणमाज्यावेक्षणपात्रदानं च । ऋत्विग्भ्यो दक्षिणा यजमानपत्नीभ्यामुभाभ्यां सह देयाः । भार्यादानं तु न भवत्येव । अष्टोत्तरशतं यथाशक्ति

---

१-नारदेनतु-सिंहे च गावो महिषी च माघे नभे तु मासे वडवा दिवा च । स्त्रियश्च पौषे प्रथमप्रसूता दद्याद्द्विजेभ्यः सह दक्षिणाश्चेति सदक्षिणं भार्यादानमुक्तं । तथा अंगिरसाऽपि व्यतिरेकेणोक्तं । बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः । विभक्तदक्षिणा ह्येता दातारं तारयंतिहीति । अत्र दानकमलाकरो व्यवस्थापयामास । तथाहि । दीयमानमथात्मानं या नारी नानुमन्यते । न सा देया नच ग्राह्या विधिरेष स्मृतौ गुरुः । नचोत्तमां नचाकामां तथा पुत्रवतीं नच । ईदृशीं त्वनुरूपेण निष्क्रयेण प्रमीलयेदिति ॥ कल्पतरौ स्त्रीपुंधर्मेषु कात्यायनोक्तेर्भार्यां दत्वा निष्क्रयेण पुनस्तां गृण्हीयादिति । वस्तुतस्तु-भार्यादानविधिरनारभ्यो विधिरेव । तथाचाश्वमेधे दक्षिणादानविधौ कात्यायनः-"उदवसानीयांते भार्या ददाति यथासंवादं॰ सानुचरीः," । "कुमारीं पालागलीं चाध्वर्यवे," । "अनुचरीर्वा फलाधिकारादितरासां," । "अनारभ्यत्वाच्चेति," । २० । ८ । २४=२५=२६=२७=॥ अत्र कर्कः-"वा शब्दः पक्षव्यावृत्तौ, न भार्या ददाति, अनुचरीरेव दद्यात्, कुत एतत्, फलाधिकाराद्भार्याणां, यजमानतुल्या एवैताः, इति, । मध्यमिकं हि यजमानस्य पत्नीनां च द्रव्यं । साधारणत्वाच्चोत्सर्गः सहैव भवति नान्यथेति । कथं तर्हि वेदवाक्यं नेयं । चतस्रश्च जायाः यजमानश्च चत्वारि च शतान्यनुचरीणां कुमारीं पंचमीं यथासंवादं दक्षिणां ददाति । इति । अपिच । यथापत्न्यो यजमानदानेऽसमर्थाः, एवं यजमानोऽपि पत्नीनां । तस्मादनारभ्यो ऽयमर्थ" इति कर्कभाष्यं । देवयाज्ञिकभाष्यमप्येवं ततश्चेदं निष्पन्नं यावज्जीवं यजमानपत्न्योरितरेतरनियमात् अन्ययोगनिषेधाच्च भार्यादानं श्रुतिसूत्रभाष्यस्मृतिसिद्धो अनारभ्योविधिरेवेति ॥ वेदवाक्यं चेदं ॥ उदवसानीयायां॰ सं॰ स्थितायां चतस्रश्च जायाः कुमारीं पंचमीं चत्वारिच शतान्यनुचरीणां यथासमुदितं दक्षिणां ददाती"ति शतपथः । कां. १३।५।८।२७ । श्रुतिवदत्रापि नारदवाक्यमुन्नेयं । चकारः समुच्चये । पौषे प्रथमप्रसूताः स्त्रियो यजमानश्च, द्विजेभ्यो दक्षिणाः, सह दद्यादिति, ॥ अपिच । "नसा देया नच ग्राह्या विधिरेषः स्मृतौगुरु"रिति कल्पतरूद्धृतं वचनमपि भार्याया अदेयत्वं द्रढयति । यदि कश्चन अज्ञानतो नारदोक्तेर्भार्यादानं वाचनिकं मत्वा तत्कृत्वा चात्मानं वंचयेत् । तदा सामायिकधर्मभंगात्तन्महदनिष्टं । तच्च कात्यायनेन "ईदृशींत्वनुरूपेण निष्क्रयेण प्रमीलयेदि"त्युपायांतरोपदेशेन परिहृतमिति ॥ इति मूलार्थः ॥

वा ब्राह्मणभोजनमिति विशेषः ॥ ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिककांडे शौनकोक्तः पौषे स्त्रीप्रथमप्रसूतिशांतिप्रयोगः समाप्तः ॥ ॥ अयमेव प्रयोगः, सिंहार्के गोः प्रसूतौ, माघमासीयबुधवासरे महिषीप्रसूतौ, श्रावणे दिवा अश्विनीप्रसूतौ च ज्ञेयः ॥

अथ योगजननशांतयः ॥ ॥ तत्रादौ पंचदशगंडांतशांतयः ॥ सुखावबोधार्थं पंचदशगंडांतानां नामानि ॥

| तिथिगंडांतस्त्रिधा । | लग्नगंडांतस्त्रिधा । | नक्षत्रगंडांतस्त्रिधा । | अभुक्तमूलगंडांतश्चतुर्द्धा २। | द्वे चंद्रोदयनक्षत्रगंडांते । |
|---|---|---|---|---|
| १पौर्णिमाप्रतिपदागंडांतः। | १ कर्कसिंहगंडांतः । | १आश्लेषामघागंडांतः। | १आश्लेषामघं । गंडांतः। | १ पुष्यगंडांतं । |
| २पंचमषष्ठीगंडांतः । | २ वृश्चिकधनगंडांतः। | २ज्येष्ठामूलगंडांतः । | २ज्येष्ठामूलं । गंडांतः। | २पूर्वाषाढागंडांतं । |
| ३दशम्येकादशीगंडांतः। | ३ मीनमेषगंडांतः । | ३रेवत्यश्विनीगंडांतः। | ३रेवत्यश्विनि । गंडांतः। | । इतिद्वेचंद्रोदयनक्षत्रगंडांते। |
| | अयमेवराशिगंडांतः। | | ४अनूराधाज्येष्ठं । | । एवं पंचदश गंडांताः १५ । |

अयमेवशिशुगंडांतः। तल्लक्षणानि ।

गंडांतो नाम संधिनाडिका । स त्रिविधः । तिथिलग्ननक्षत्रभेदात् । सोऽपि प्रत्येकं त्रिधेति नवधा । तथाच ज्योतिर्निबंधे । तत्रादौ तिथिगंडांतः । पूर्णानंदाख्ययोस्तिथ्योः संधिर्नाडीद्वयं तथा । गंडांतं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥१॥ पूर्णाः पंचमी ५ दशमी १० पूर्णिमाः १५। नंदाः प्रतिपत् १ षष्ठी ६ एकादश्यः ११॥ पंचमीदशमीपूर्णिमानां ५-१०-१५ अंतिमैकैका घटिका ।

प्रतिपत्षष्ठ्येकादशीनां १-६-११ आदिमैकैकाघटिका। एवं संधिघटिकायुग्मं गंडांतः। तथाच। पूर्णिमाप्रतिपत्संधिघटिकाद्वयं १ पंचमीषष्ठीसंधिघटिकाद्वयं २ दशम्येकादशीसंधिघटिकाद्वयं ३ इति त्रिधा तिथिगंडांतः ॥ अथ लग्नगंडांतः। अयमेव राशि-गंडांतः। कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः। गंडांतमंतरालं स्याद्घटिकार्द्धं मृतिप्रदं। कुलीरः कर्कः। सिंहः प्रसिद्धः। कीटो वृश्चिकः। चापो धनुः। मीनमेषौ प्रसिद्धौ। कर्कवृश्चिकमीनलग्नानामंतिमा अर्द्धघटिका। सिंहधनुर्मेषाणामादिमा अर्द्धघटिका। राश्योः संध्येकघटिका राशिगंडांतः। तथा च। कर्कसिंहगंडांतः १ वृश्चिकधनगंडांतः २ मीनमेषगंडांतः ३ इति त्रिधा लग्नगंडांतः ॥ अथनक्षत्रगंडांतः। सार्पैंद्रपौष्णभेष्वंत्यषोडशांशाभसंधयः। तदग्रभेष्वाद्यपादा भानां गंडांतसंज्ञिताः। सार्प-माश्लेषा। ऐंद्रं ज्येष्ठा। पौष्णं रेवती। तदग्रभानि क्रमेण। मघा। मूलं। अश्विनी च। षोडशांशा नक्षत्रभोगस्य। अर्द्ध-प्रहर इतियावत्। आद्यपादाः षोडशांशाः। यामप्रमाणं नक्षत्रगंडांतमितियावत् ॥ रत्नमालायामप्येवं। पौष्णाश्विन्योः सार्पपित्र्यर्क्षयोश्च यच्च ज्येष्ठामूलयोरंतरालं। तद्गंडांतं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टं। चतुर्नाडिकं याम-प्रमाणं ॥ उत्तरगार्ग्यस्तु नक्षत्रगंडांतमन्यथाऽऽह। अश्विनीमघमूलादौ त्रिषड्नव ३।६।९ नाडिकाः। रेवतीसार्पशाक्रांते मासाश्च १२ ऋतु ६ सायकाः ५। अश्विन्या आदिमास्तिस्रः ३ रेवत्या अंतिमा द्वादश १२। एवं पंचदश १५ घटिकं रेवत्यश्विनीगंडांतं १॥ मघाया आदिमाः षट् ६ आश्लेषाया अंतिमाः षट् ६। एवं द्वादश १२ घटिकं मघाऽऽश्लेषागंडांतं ॥२॥ मूलस्यादिमा नव ९ ज्येष्ठाया अंतिमाः पंच ५। एवं चतुर्दश १४ घटिकं मूलज्येष्ठागंडांतं ॥ ३ ॥ इति रेवत्य-

श्विनी १ आश्लेषामघा २ ज्येष्ठामूल ३ मिति त्रिधा नक्षत्रगंडांतः ॥ अत्र नक्षत्रगंडे दोषतारतम्यं सूर्यसिद्धांते । सार्पेंद्र-पौष्णधिष्ण्यानामंत्याः पादा भसंधयः । तदग्रभेषु साद्धांशो गंडांतं नाम कीर्त्यते । अर्द्धांशश्चरणार्द्धप्रहर इत्यर्थः । व्यतीपातत्रयं घोरं गंडांतत्रितयं तथा । एतद्भसंधित्रितयं सर्वकर्मसु वर्जयेत् ॥ व्यतीपातत्रयं । योगेषु सप्तदशो व्यतीपातनामा योगः १ महापातो गणितसाध्यो महाव्यतीपातनामा योगः २ महावैधृतिपातश्चे ३ ति व्यतीपातत्रयं । महापातो नाम रवींदुक्रांतिसाम्यं । सांप्रदायिकाश्चतुर्नाडिक एव नक्षत्रगंडांते शांतिकं कुर्वंति। । अथ गंडांतफलमाह गर्गः। अश्विनीमघमूलानां पूर्वार्द्धे बाध्यते पिता । पूषाहिशाक्रे पश्चार्द्धे जननी बाध्यते शिशोः । पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा । आत्मघ्नः संध्ययोर्जातो नास्ति गंडो निरामयः । अश्विनीमघमूलानामाद्यो भागो दिवा दुष्टतमः । रेवत्याश्लेषाज्येष्ठानामंतिमो भागो रात्रौ दुष्टतमः । तत्रापि द्वे द्वे घटिके अतिदुष्टतमे । दिवाजातो दिवसगंडांतजातः । रात्रिजातो रात्रिगंडांतजातः । संध्ययोर्जातः संधिगंडांतजातः ॥ रत्नसंग्रहे । तिथ्यर्क्षगंडे पितृमातृनाशो लग्ने तु संधौ तनयस्य नाशः । सर्वेषु नो जीवति हंति बंधून् जीवन्पुनः स्याद्बहुवारणाश्वः । इति गंडांतपरत्वेन दुष्टफलव्यवस्था। तिथिलग्नगंडांतयोः परिहारः शाकल्यसंहितायां । तथैव तिथिगंडांतं नास्तींदौ बलशालिनि । तथैव लग्नगंडांतं नास्ति जीवे बलान्विते। इति ॥ गंडांतजातानां षण्मासं मुखावलोकनवर्जनं । रत्नसंग्रहे। सर्वेषां गंडजातानां परित्यागो विधीयते । वर्जयेद्दर्शनं तेषां तच्च षाण्मासिकं भवेत्। तद्दर्शनं । वर्जयेद्दर्शनं श्रावमित्यपि पाठांतरं । श्रवएव श्रावः । श्रवणमपि वर्जयेदिति । परित्यागो विधीयत इत्यत्र त्यजतेर्न दान-

रूपोऽर्थः स्वत्वस्यापायात्।पातकिनं त्यजतीत्यादौ त्यजतेर्दानार्थत्वाभाववत्। वर्जयेद्दर्शनं तेषामित्यग्रिमवाक्यैकवाक्यतया दर्शनवर्जनतात्पर्यार्थकत्वाच्च ॥ अथाभुक्तमूलनामकं गंडांतं। तच्चतुर्विधं। आश्लेषामघयोः सार्पपैत्राभिधं १ ज्येष्ठामूलयोः ऐंद्रनैर्ऋताभिधं २ रेवत्यश्विन्योः पौष्णाश्विनाभिधं ३ अनूराधाज्येष्ठयोः मैत्रैंद्राभिधं चे ४ ति। मैत्रैंद्रस्य शिशुगंडांतमिति संज्ञांतरं। अत्र मूलं ॥ वसिष्ठः ॥ भुजंगपौरंदरपौष्णभानां तदग्रभाणां च यदंतरालं। अभुक्तमूलं प्रहरप्रमाणं त्यजेत्सुतं तत्रभवं सुतां च ॥ कश्यपः ॥ ज्येष्ठांत्यमूलयोरंतरालयामोद्भवः शिशुः। अभुक्तमूलजः सोप्याश्लेषापितृभयोरपि॥ नारदः॥ यो ज्येष्ठामूलयोरंतरालप्रहरजः शिशुः। अभुक्तमूलजः सार्पमघानक्षत्रयोरपि। आश्लेषाज्येष्ठारेवतीनामंत्याश्चतस्रः। मघा-मूलाश्विनीनामाद्याश्चतस्रः। इत्यंतरालाष्टघटिकं। सार्पपैत्रं १ ऐंद्रनैर्ऋतं २ पौष्णाश्विनं ३ चेति त्रिविधमभुक्तमूलं। बृहन्मनुस्तु ॥ ऐंद्रनैर्ऋतं एकघटिकमाह। ज्येष्ठांते घटिकार्धं तु मूलादौ घटिकार्धकं। तयोरंतर्गतानाडी अभुक्तं मूलमुच्यते। वसिष्ठस्तु त्रिघटिकमाह ॥ ज्येष्ठांते घटिका चैका मूलादौ घटिकाद्वयं। अभुक्तमूलमित्याहुर्जातं तत्र विवर्जयेत्। बृहन्नार-दस्तु चतुर्घटिकमाह। अभुक्तमूलगंडांतं नाडिकानां चतुष्टयं। तत्रैंद्रांत्यघटीद्वंद्वं मूलाद्यं द्वंद्वमेवचेति। मूलजननपरि-शिष्टभाष्ये कामदेवदीक्षितास्तु। पौष्णाश्विन्योस्तथाश्लेषाभिधयोर्ज्येष्ठमूलयोः। चतुर्घटीप्रमाणं तु गंडांतं परिकीर्तितमिति। त्रीण्यपि चतुर्घटिकान्याहुः। चतुर्थं मैत्रैंद्रमाह गर्गः। घटिकैका च मैत्रांते ज्येष्ठादौ घटिकाद्वयं। तयोः संधिरिति ज्ञेयं शिशुगंडं समीरितमिति। अनूराधाया अंत्यैका। ज्येष्ठाया आद्ये द्वे। इति त्रिघटिकं शिशुगंडं मैत्रैंद्रं। मैत्रैं-

द्रशिशुगंडवत्सार्पमैत्रादीनामपि औपचारिक्यः पितृगंडमातृगंडशिशुगंडइत्येवं संज्ञाः । तथाच गर्गः ॥ अश्विनीमघमूलानां पूर्वार्धे बाध्यते पिता । पूषाहिशाक्रे पश्चार्धे जननी बाध्यते शिशोः । पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा । आत्मघ्नः संध्ययोर्जातो नास्ति गंडसमो रिपुः । अश्विनीमघमूलानां दिवादुष्टतमे आद्यभागे जातः । पितृघ्नः पितृगंड इत्यर्थः । तथा रेवत्याश्लेषाज्येष्ठानां रात्रौ दुष्टतमे पश्चार्द्धे जातो मातृघ्नो मातृगंडः । तथा एतेषां अतिदुष्टतमे द्विद्विघटिकात्मके संधिकाले जात आत्मघ्नः शिशुगंड इति तदर्थः । पितृगंडादिसंज्ञाप्रयोजनं शांतिप्रयोगे । उत्तरगार्ग्यः । तिथिगंडे त्वनड्वाहं नक्षत्रे धेनुरुच्यते । कांचनं लग्नगंडे तु गंडदोषो विनश्यति । आद्यभागे पितुर्गंडे त्रयाणामभिषेचनं । इतरत्र शिशोर्मातुरभिषेकं च कारयेदित्यादौ तत्र गंडपरत्वेन विशिष्टोनडुहादिदानविधिः गंडांतजातानामेष एव विधिरित्यतिदिष्टमूलजननशांत्यंगकृष्णगोतिलादिदानैरेवोपसंहृतः । पितुर्गंडे त्रयाणामभिषेकः, इतरत्रगंडे द्वयोरभिषेक इति तु शाखांतरपरं न कातीयपरं । तत्रासीनान् संपातेनैकेनाभिषिंचति शिरसोऽध्यनुलोममितिमूलजननपरिशिष्टं । अत्र आसीनानिति द्वितीयया त्रयाणां संस्कार्यत्वेन प्राधान्यात् । इतिका० दी० भाष्यात् । । अभुक्तमूलफलं । भल्लाटः ॥ अभुक्तमूलसंभवं परित्यजेत्तु बालकं । समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् । तदाद्यपादके पिता विपद्यते जनन्यथ । तृतीयके धनक्षयश्चतुर्थकः शुभावहः । तदीयमंत्यपादतः फलं तथैव सार्पभे । इति मूलाश्लेषावत् फलमाह । चतुर्थः शुभो बालाभिप्रायः । शौनकोऽपि । त्यागो वा मूलजातस्य स्यादष्टाब्दात्प्रदर्शनं । अभुक्तमूलजातानां परित्यागो विधीयते । अदर्शनाद्वापि पितुः स तु

तिष्ठेत्समाष्टकं । एवं च दुहितुर्ज्ञेयं मूलजातफलं बुधैः। मूलजननभाष्ये। जन्मकाले च यात्रायां गंडांतं नेष्टदं शुभं । कात्यायनोऽपि ॥ अथातो मूलजननविधिं व्याख्यास्याम इत्युपक्रम्य मूलांशे प्रथमे पितुर्नष्टो द्वितीये मातुस्तृतीये धनधान्यस्य चतुर्थः शुभावह इति तत्फलं, मूलनक्षत्रे मूलविधानं कुर्यादिति कालं शांतिकं चोक्त्वा, सार्पदैवते गंडांतजातानामेषएवविधिरित्युपसंहारेण सकलगंडांतजनने मूलर्क्षवत्फलं शांतिकं चोवाच । गंडांतशांतिकेऽपि सार्पदैवतेइतिसप्तम्यासार्पर्क्षकालंचोवाच । एतेनाभुक्तमूलजातानां परित्यागपक्षः समाष्टकादर्शनपक्षश्च कात्यायनासम्मतः । निमित्तानंतरं प्रथमआगामिनि तन्निमित्तके तद्दैवत्ये वा नक्षत्रे तन्नैमित्तिकविधानात् इति ॥ अथ पुष्यगंडांतं पूर्वाषाढागंडांतं चाह वृद्धगार्ग्यः प्रयोगपारिजाते । चंद्रोदये पुष्यजलर्क्षजातो निहंति तातं जननीं सपुत्रां । पुष्ये जलर्क्षे पितृमातृपुत्रतन्मातुलं हंति पदक्रमेण । अगस्त्यः। त्वाष्ट्रे च पुष्येच तथाच तोये कन्याकुलीरोदयचापलग्ने । शुभोग्रहः पश्यतितं नहन्यात् पितृंश्चमातृंश्च सुतंचमातुलं। वसिष्ठः। पुष्ये कर्काटके चापे जलर्क्षे पितृमृत्युके । पुत्रोजातो यदिभवेन्मातरं स जिघांसति। पूर्वाषाढेच पुष्येच पितरं मातरं सुतं। मातुलंचतथा हन्यात् प्रथमाद्यंशजःक्रमात् । पितृमृत्युके । पितरि मघायां । मृत्युके भरण्यामिति । चंद्रोदयवेलापुष्यपूर्वाषाढयोः प्रथमचरणे जनने पितृनाशः। द्वितीयचरणे मातृनाशः । तृतीयचरणे शिशुनाशः । चतुर्थचरणे मातुलनाशः । इति फलं । अस्यापवादः । जननसमये कर्कलग्नं कन्यालग्नं धनलग्नं वा चेत् तल्लग्नं शुभग्रहदृष्टियुतं चेन्न पूर्वोक्तदोषः । इति तदर्थः। तदित्थं पंचदश गंडांतानि ॥ १५ ॥ त्रीणि तिथिगंडांतानि ॥ ३ ॥ त्रीणि लग्नगंडांतानि ॥ ३ ॥ त्रीणि नक्षत्रगंडांतानि

॥ ३ ॥ चत्वारि अभुक्तमूलगंडांतानि ॥ ४ ॥ द्वेचंद्रोदयनक्षत्रगंडांते ॥ २ ॥ इत्येवं पंचदशगंडांतानि । सर्वगंडांतेषु शांतिकं मूलजननशांतिरेव । शांतिककालः प्रसूतिदिनादागामिप्रथममाश्लेषानक्षत्रं । तदसंभवेजननाद्द्वादशाहः, शुभदिनंवा । निर्ऋतिर्देवता । संकल्पादौतत्तद्गंडांतनामपदोल्लेखश्च । एतावानेव विशेषः । । इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे शांतिककांडे पंचदश गंडांतशांतयः ॥ १५ ॥ गंडांतशांतिषु कातीयेतरेषां त्वेवंव्यवस्था । तिथिलग्नगंडांतजनने रेवतीनक्षत्रगंडांतजननेच कौस्तुभादिधृकृता उत्तरगार्ग्योक्ता शांतिः।मूलाश्लेषागंडांतेतु शौनकोक्ता । अभुक्तमूलगंडांतेषु तत्तन्नक्षत्रोक्तामूलाश्लेषादिशांतयः। चंद्रोदयनक्षत्रगंडांतयोस्तत्तन्नक्षत्रोक्ते शांती । अस्याः शांतेः गंडांतसामान्यविहितरुद्राभिषेकादिना गोदानादिनाच साकं, समुच्चयः । इयं शांतिः षण्मासोत्तरं अष्टवर्षोत्तरं वा क्रियते । नार्वाक् । अस्यां शांतौ पितृमातृसुतारिष्टत्वेन गोमुखप्रसवस्य नैयमिकत्वात्, वर्जयेद्दर्शनं तेषां तच्च षाण्मासिकं भवेत् । अभुक्तमूलसंभवं परित्यजेत्तु बालकं । समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् । इति षाण्मासिकसमाष्टकदर्शनवर्जनविशिष्टविधेस्तन्मुखदर्शनभावेन गोमुखप्रसवस्यासंभवात् । । षण्मासोत्तरं समाष्टकोत्तरमपि एकादशेऽह्नि शुभेऽह्निवा कार्या । अभुक्तेतरजातस्यसूतकांत्यदिनेऽथवा । शांतिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेदित्युत्तरगार्ग्यवचनात् । अभुक्तगंडांतानां पूर्वार्धः । इतरः उत्तरार्धः । तत्र जातस्येत्यर्थः । सूतकांत्यदिनमेकादशाहोपलक्षणं । सर्वेषां गंडजातानां परित्यागो विधीयते । वर्जयेद्दर्शनं तेषामिति प्रागुक्तवचसैकवाक्यत्वात् । तथेदं कौस्तुभकृता कमलाकरेण शांतिसारकारेण च गंडांतशांतिप्रयोगे षण्मासोत्तरं एकादशेऽहनि तथा अभुक्तमूलोत्पत्तौ

समाष्टकादर्शनपक्षे समाष्टकानंतरं द्वादशाहे तद्भिन्नमूलोत्पत्तौतु द्वादशाहेवा इति स्पष्टीकृतमेव । यत्तु अस्मदीयैः पद्मनाभदीक्षितैः प्रयोगदर्पणे अत्र प्रकरणे शांतिकमलाकरस्थमेव यथाप्रयोगमुधृतं । तत् स्वसूत्रतद्भाष्यविरुद्धत्वादनादेयमित्यवगम्यतामिति ॥ इति कातीयेतरेषां गंडांतशांतिव्यवस्था ॥ इति गंडांतजननशांतयः ॥ ॥

अथ गंडयोगजननशांतिः ॥ श्रीः ॥ तत्र यामलपरिशिष्टे कात्यायनः ॥ सार्पे नैर्ऋते गंडजातेषु । इति । एतदेवेतिच ॥ गंडयोगानाह उत्तरगार्ग्यः ॥ अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः । गंडांतानां च नामानि महादोषकराणि च । दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ । शूले गंडे च परिघे वज्रे च यमकंटके । यमघंटके इति वा पाठः । कालदंडे मृत्युयोगे दग्धयोगे च दारुणे । तस्मिन् गंडदिने प्राप्ते प्रसूतिर्यदि जायते । अतिदोषकरी प्रोक्ता तत्र पापयुते सति । विचार्य तत्र दैवज्ञान् शांतिं कुर्याद्यथाविधीति । वसिष्ठः ॥ व्यतीपातेऽगहानिः स्यात्परिघे मृत्युमादिशेत् । वैधृतौ पितृहानिः स्यादिति । विष्ट्यां दारिद्र्यमाचष्टे यमघंटे फलं रुक् स्यात् । शूले समूलनाशः स्यात् । गंडो नाम ग्रहयोगभेदः । तथाच मेदिनीकोशः । गंडः स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यंगे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे इति । दिनक्षयादिगंडेषु गंडांतशब्दः पारिभाषिकः । नतु मुख्यः । इति कमलाकरः । शूलादीनां निषिद्धांशा रत्नमालायां । विरुद्धसंज्ञा इह ये च योगास्तेषामनिष्टः खलु पाद आद्यः । स वैधृतिस्तु व्यतिपातनामा सर्वोप्यनिष्टः परिघस्य चार्द्धं ॥ तिस्रस्तु नाड्यः प्रथमे सवज्रे व्याघातसंज्ञे नवपंचशूले । गंडेऽतिगंडे च षडेव नाड्यः शुभेषु कार्येषु विवर्जनीयाः । इति ।

विरुद्धसंज्ञाः । विष्कंभः । अतिगंडः । शूलः । गंडः । वज्रः । व्याघातः । पक्षांतरमाह । तिस्र इति प्रथमे विष्कंभे । तत्र पापयुते सतीति । विष्ट्यादेरपि निषिद्धांशयुते जन्मकाले सति दोषाधिक्यमित्याशयः । ततश्च प्रतिप्रसूतेर्भद्रापुच्छादौ जन्मनि स्वल्पदोष इत्यर्थः । व्यतीपातइति व्यतीपातत्रयं । सप्तदशयोगेषु सप्तदशो व्यतीपातो योगः १ द्वितीयो महाव्यतीपातः २ तृतीयो महावैधृतिपातश्च ॥३॥ महापातोनाम रवींदुक्रांतिसाम्यं । तच्च गणितसाध्यं । तथाच मुहूर्तचिंतामणौ ॥ गंडांतेंद्रभशूलपातपरिघव्याघातगंडावमे संक्रांतिव्यतिपातवैधृतिसिनीवालीकुहूदर्शके । वज्रे कृष्णचतुर्दशीषु यमघंटे दग्धयोगे मृतौ विष्टौ सोदरभेजनिर्न्ने पितृभे शस्ता शुभा शांतित इति । पातो महाव्यतीपातः महावैधृतिपातश्च । व्यतीपातः सप्तदशो योगः । दिनक्षयः क्षयतिथिः । विष्टिः भद्राकरणं विष्टिलक्षणं । संग्रहे । कृष्णे तृतीया दशमी च रात्रौ तत्सप्तमीभूतदिवा च विष्टिः । एकादशीनक्तमतश्चतुर्दशी शुक्लाष्टमीपूर्णदिवा च विष्टिः । कृष्णपक्षे तृतीयादशम्यो रात्रौ विष्टिर्भवति । सप्तमीचतुर्दश्योर्दिवाविष्टिः । शुक्लपक्षे चतुर्थ्येकादश्यो रात्रौ विष्टिः । अष्टमीपौर्णमास्योर्दिवाविष्टिरितितदर्थः । अथयोगानां निषिद्धांशाः । विष्कंभवज्रयोः । आद्यास्तिस्रो नाड्यः ॥ ३ ॥ आद्यः पादो वा । व्यतीपातवैधृती सर्वावनिष्टौ । परिघस्याद्यमर्द्धं ३० नाड्यः । व्याघातस्य आद्या नव नाड्यः ॥ ९ ॥ आद्यः पादो वा । शूलस्याद्याः पंचनाड्यः ५ आद्यः पादो वा । गंडातिगंडयोराद्याः षण्णाड्यः ६ आद्यः पादो वा । अथ यमकंटकयोगलक्षणं । वृद्धवसिष्ठः । अर्कारतमसौम्यार्यमंदा यद्येकराशिगाः । कंटकाख्यो महादोषः सर्वकर्मविनाशकृत् । अर्को रविः । आरो भौमः । तमो राहुः । सौम्यो बुधः । आर्यो

गुरुः । मंदः शनिः ॥ ६ ॥ एते षट् यदि एकराशिगास्तदा यमकंटकयोगो भवति ॥ यमघंटकयोगमाह गार्ग्यः । मघाविशाखाआर्द्रा च मूलमृक्षं च कृत्तिका । रोहिणी हस्त इत्येते यमघंटाः क्रमाद्रवेरिति । क्रमाद्रवेः रविमारभ्य । रवौ मघा १ इंदौ विशाखा २ भौमे आर्द्रा ३ बुधे मूलं ४ गुरौ कृत्तिका ५ भृगौ रोहिणी ६ शनौ हस्तः ७ इति सप्त यमघंटाः । अथ कालदंडयोगः । अश्विन्यादिसाभिजिन्नक्षत्राणां चतुर्भिश्चतुर्भिः क्रमेणादित्यवारादिषु योगेन निष्पन्नेषु अष्टाविंशतियोगेषु पठितः आनंदः कालदंडश्चेति द्वितीयः भानुवासरभरणीयोगः कालदंडो योगः । अथ मृत्युयोगाः । मैत्रविश्वांबुपाद्येंदुसार्पसूर्याख्यतारकाः । मृत्युयोगा मृतिकराः सूर्यवारादिषु क्रमात् । मैत्रमनूराधा । विश्वे वैश्वदेवमुत्तराषाढा । अंबुपं शततारका । आद्यमश्विनी । इंदुर्मृगं । सार्पमाश्लेषा । सूर्यो हस्तः । रविवारादिषु क्रमेण नक्षत्रयोगे मृत्युयोगाः । रवौ अनूराधा १ इंदौ उत्तराषाढा २ भौमे शततारका ३ बुधे अश्विनी ४ गुरौ मृगं ५ शुक्रे आश्लेषा ६ शनौ हस्तः ७ एते सप्त मृत्युयोगाः । अथ दग्धयोगानाह नारदः । एकादशी चेंदुवारे द्वादशी चार्कवासरे । षष्ठी बृहस्पतेर्वारे तृतीया बुधवासरे । अष्टमी शुक्रवारे च नवमी शनिवासरे । पंचमी भौमवारे च दग्धयोगाः प्रकीर्तिताः । इति । रविवासरे १२ सोमे ११ भौमे ५ बुधे ३ गुरौ ६ शुक्रे ८ शनौ ९ एते सप्त दग्धयोगाः । । अथ उत्तरगार्ग्योक्ता शांतिः । विचार्य तत्र दैवज्ञान् शांतिं कुर्याद्यथाविधि । यजनं देवतानां च ग्रहाणां चैव पूजनं । यजनं वक्ष्यमाणं । देवतापदेन गुरुदेवताविप्रा गृह्यंते । जपांतोक्तकर्मणामंते गुरुदैवतविप्राणामिति प्रशंसापरवाक्यशेषे तत्संकीर्तनात् । दीपं

शिवालये भक्त्या घृतेन परिदापयेत् । अभिषेकं शंकराय अश्वत्थस्य प्रदक्षिणाः । आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनं । गुरुदैवतविप्राणां पूजनं गोत्रवर्द्धनं । पुष्ट्यायुस्तुष्टिशांत्यर्थमभीष्टफलसिद्धये। सर्वारिष्टपरीहारार्थाय यज्ञं समाचरेत् । शिवाय विधिवद्भक्त्या दीपदानं करोति यः । अखंडं गोघृतेनैव स वै मृत्युं जयेन्नरः । विष्णुमूर्त्तिम्महापुण्यमश्वत्थं श्रीकरं सदा । प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युंजयं जपेत् । सर्वसंपत्समृद्ध्यर्थं नित्यं कल्याणवृद्धये । अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मण-भोजनं । अभिषेकं शिवे शांतिं कृत्वा भक्त्या नरोत्तमः । अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः । गाणपत्यं पुरुषसूक्तं सौरं मृत्युंजयं शुभं । शांतिजाप्यं पुनश्चैव कृत्वा मृत्युंजयी भवेत् । मूले वा सार्पगंडे वा कुर्यादेतानि सर्वतः । आयुर्वृद्धि-करार्थाय गंडदोषप्रशांतये । इति उत्तरगार्ग्योक्ता गंडयोगजननशांतिः॥ महर्षिकात्यायनेन तु सार्पे नैर्ऋतेचेत्युभयत्र गंडयोगे-चेत्युभययोगे जनने यमलजननशांतिरुक्ता । तथाच सूत्रं । सार्पे नैर्ऋते गंडजाते एतदेवेति च। सार्पे आश्लेषायां । नैर्ऋते मूलनक्षत्रेः गंडजाते गंडेषु जातः गंडजातः। तस्मिन् गंडजाते । निमित्तसप्तमी । गंडसामान्यात्सर्वगंडेषु इत्यर्थः। नैमित्तिकं एतदेवेति यमलजननशांतिकमेवेत्यर्थः। अत्र देवता मरुत एव। होमद्रव्यं चरुस्तद्देवत्यꣳस्थालीपाकꣳश्रपयित्वेत्यस्यापि गंड-जाते एतदेवेत्यनेन तत्प्राप्तेः। मूलनक्षत्रवत्कुर्यात्सार्पे गंडे स्वनामत इति मानवसंहितोक्तेः संकल्पादौ तत्र तत्र तत्तद्गंडनामोल्लेखः। अन्यत्सर्वं यमलजननशांतिरेव न कश्चिद्विशेषः । इति कातीयानां सार्पे नैर्ऋते च गंडयोगे सति जननशांतिः । ।

अथ गंडयोगानामनुक्रमणिका ।

| | | | |
|---|---|---|---|
| १ दिनक्षयः | ७ विष्टिः—भद्रा | १४ यमकंटकः | |
| २ व्यतीपातः | ८ परिघः | १५ यमघंटकः | |
| ३ महाव्यतीपातः | ९ शूलः | १६ कालदंडः | |
| ४ वैधृतिः | १० गंडः | १७ मृत्युयोगः | |
| ५ महावैधृतिपातः | ११ अतिगंडः | १८ दग्धयोगः | |
| ६ व्याघातः | १२ वज्रः | | |
| | १३ विष्कंभः | | |

अथनक्षत्राधिकरणकगंडाः

१ सार्पगंडः
२ नैर्ऋतगंडः
३ ऐंद्रगंडः
४ अभुक्तमूलगंडः
५ ज्येष्ठागंडः
६ पूर्वाषाढागंडः
७ पुष्यगंडः
८ आश्विनगंडः

अथ व्यतीपातवैधृतिरविसंक्रमणयोगजननशांतिः ॥ श्रीः ॥ उत्तरगार्ग्यः ॥ अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः । वैधृतौ च व्यतीपाते महादोषोऽभिजायते । कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः । संक्रांतिश्च रवेस्तत्र जातो दारिद्र्यकारकः । संक्रमणकालात्पूर्वाः पराश्च षोडशघटिकाः १६ संक्रमणशब्दार्थः । द्वात्रिंशन्नाडीभिः ३२ संपूर्णसूर्यमंडलस्य राश्यंतरप्रवेशात् । दरिद्राणां महद्दुःखं व्याधिपीडा महद्भयं । अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा । स्त्रीणां

च शोको दुःखं च सर्वनाशकरो भवेत् । शांतिश्च पुष्कला कार्या तत्र दोषो न कश्चन । गोमुखप्रसवं कुर्याच्छांतिं कुर्यात्प्रयत्नतः । जपाभिषेकदानैश्च होमादपि विशेषतः । नवग्रहमखं कुर्यात्तस्य दोषोपशांतये । प्रथमं गोमुखाज्जन्म ततः शांतिं समारभेत् । पाठक्रमादेव प्राथम्ये सिद्धे पुनः प्राथम्यविधानेनेतरशांतिषु गोमुखप्रसवस्य प्राथम्यं नियम्यते ॥ गृहस्य पूर्वदिग्भागे गोमयेनानुलिप्य च । स्वलंकृतप्रदेशे तु व्रीहिराशिं प्रकल्पयेत् । पंचद्रोणमितं धान्यं तदर्धं तंडुलेन च । तदर्धं तु तिलैः कुर्यादन्योऽन्योपरि कल्पयेत् । अन्योऽन्योपरीति क्रमोपादानात् । व्रीहिभिः प्रथमः परिधिः । तन्मध्ये द्वितीयस्तंडुलपरिधिः । तृतीयस्तदंतस्तिलपरिधिः । इति शांतिरत्ने । धान्यमानं पंचद्रोणाः । तंडुलानां सार्धद्रोणौ । सपादो द्रोणस्तिलानां । द्रोणः (भाषायां अदमणी)इत्युच्यते तथाचाभिधानकोशटीकायां । मृद्वेणुकाष्ठलोहादेः पात्रं यच्चतुरंगुलं । विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् । कुडवः (भाषायां पावशेर)इत्युच्यते । पलं प्रकुंचकं मुष्टिः कुडवस्तच्चतुष्टयं । चत्वारः कुडवाः प्रस्थश्चतुष्प्रस्थं तथाढकं । प्रस्थः (भाषायां शेर)इत्युच्यते । आढकः (भाषायां पायली)इत्युच्यते । अष्टाढको भवेद्द्रोणः । इति । तत्रैव मानांतरं च । अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलं । पुष्कलानि तु चत्वारि आढकः परिकीर्तितः । चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणमिति ॥ द्रव्यतृतीयराशौ तु चाष्टपत्रं लिखेद्बुधः । पुण्याहं वाचयित्वा तु आचार्यं वरयेत्पुरा । पुरा राशिकल्पनात्पूर्वमित्यर्थः । आचारवंतं धर्मज्ञं कुलीनं च कुटुंबिनं । मंत्रतत्त्वार्थतत्त्वज्ञं शांतिकर्मणि कोविदम् । पंचांगभूषणं दद्यात्पट्टवस्त्रांगुलीयकं । राशौ प्रतिष्ठितं कुंभमव्रणं सुमनोहरं । तीर्थोदकेन संपूर्य समृदौषधिपल्लवं । सगव्यगंधरत्नं

च वस्त्रयुग्मेन वेष्टयेत् । तस्योपरि न्यसेत्पात्रं सूक्ष्मवस्त्रेण संयुतं । प्रतिमां स्थापयेद्धीमान् साधिप्रत्यधिदेवतां । चंद्रादित्या-
कृती पार्श्वे मध्ये वैधृतिमर्चयेत् । वैधृतिं तद्देवतां रुद्रं । मध्ये रुद्रः । तद्दक्षिणोत्तरयोः सूर्यचंद्रौ इत्यर्थः ॥ एवमेव
व्यतीपाते शांतौ संक्रमणस्य च । भानोरुत्तरतो रुद्रमग्निं दक्षिणतो यजेत् । व्यतीपातसंक्रमणशांत्योर्मध्ये सूर्यः । तद्दक्षिणो-
त्तरयोरग्निरुद्रावित्यर्थः । निष्कमात्रेण वाऽर्द्धेन पादेनापि स्वशक्तितः । साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च
निष्कोऽस्त्रीति नानार्थः । पलं कर्षचतुष्टयं । गुंजानामशीतिः ८ कर्षः । प्रतिमाः कारयेद्धीमांस्तत्तल्लक्षणलक्षिताः । प्रतिमा-
लक्षणमेकनक्षत्रशांतौ द्रष्टव्यं । प्रतिमापूजनार्थाय वस्त्रयुग्मं निवेदयेत् । अधिदैवं भवेत्सूर्यश्चंद्रः प्रत्यधिदैवतं । तं तं
व्याहृतिपूर्वेण तत्तन्मंत्रेण पूजयेत् । तत्तन्मंत्रो व्याहृतिपूर्वकः । त्र्यंबकेन मंत्रेण प्रधानप्रतिमां यजेत् । वैधृतिशांताविदं ।
भानोः प्रत्यधिदेवताया अप्यसौ मंत्रः । उत्सूर्यमिति मंत्रेण सूर्यपूजां समाचरेत् । कातीयानामुदुत्यमिति मंत्रः । प्रधानाधि-
देवतयोरसावेव मंत्रः । आप्यायस्वेति मंत्रेण सोमपूजां समाचरेत् । उपचारैः षोडशभिर्यद्वा पंचोपचारकैः । अर्चितं
गंधपुष्पाद्यैर्गुडनैवेद्यमर्पयेत् । मृत्युंजयेन मंत्रेण प्रधानप्रतिमां स्पृशन् । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टा-
विंशति वा चाथ प्रजप्याथ स्वशक्तितः । सर्वसौरं प्रजप्याथ सोमार्थं सोममंत्रतः । व्यतीपातसंक्रमणशांत्योस्तु आदौ
सौरजपः । ततो मृत्युंजयजपः । आनोभद्रेति सूक्तं च भद्राअग्नेश्च सूक्तकं । जपेच्च पौरुषं सूक्तं त्र्यंबकमतःपरं । कुंभं स्पृष्ट्वा
चतुर्दिक्षु जपं कुर्युस्तथर्त्विजः । सर्वसौरं सर्वेषां ऋग्यजुःसामाथर्वणिकानां सौराणां समाहारः सर्वसौरं । तानि च चत्वारि

सौराणि पोषे स्त्रीप्रथमप्रसूतिशांतिप्रयोगे उक्तानि । सोममंत्रत इति सोममंत्रमित्यर्थः । सार्वविभक्तिकस्तसिल् । आनो-भद्रेति सूक्तं भद्राअग्नेइति सूक्तं पौरुषं सूक्तं च कृष्णचतुर्दशीशांतावुक्तं । त्रैय्यंबकं रौद्रं । नमस्तेऽध्यायः । चतुर्दिक्षु चत्वारि सूक्तानीत्यर्थः । एकैकस्य जप इत्यन्ये । कुंभस्य पश्चिमे देशे स्थंडिलेऽग्निं प्रकल्पयेत् । स्वगृह्योक्तविधानेन कारयेत्संस्कृता-नलं । त्रैय्यंबकेण मंत्रेण समिदाज्यचरून् हुनेत् । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टाविंशति वा कुर्यात्स्वस्वश-क्त्यनुसारतः । मृत्युंजयेन मंत्रेण तिलहोमं समाचरेत् । त्रैय्यंबकेनेति वैधृतिशांतिकप्रधानदेवतामंत्रः । सच्च व्यतीपातसंक्र-मणशांत्योः प्रधानदेवतोक्तमंत्रद्योतकः । प्रधानोपक्रमात् तिसृष्वपि शांतिषु होमद्रव्याणि समिदाज्यचरवः । होमसंख्यापक्षां-तराणि प्रधानदेवतापराणि । ततश्चाधिप्रत्यधिदेवतयोः प्रधानतोऽल्पसंख्या । तिलैर्मृत्युंजयहोमस्तु तिसृष्वपि शांतिषु । ततः स्विष्टकृतं हुत्वा अभिषेकं च कारयेत् । समुद्रज्येष्ठासूक्तेन आपोहिष्ठातृचेन च । अक्षीभ्यामिति सूक्तेन पावमानीभिरे-व च । त्रैय्यंबकेण उत्सूर्यआप्यायस्वेति मंत्रतः । सुरास्त्वामिति मंत्रैश्च अभिषेकं समाचरेत् । समुद्रज्येष्ठासूक्तं ज्येष्ठाजनन-शांतावुक्तं । अक्षीभ्यामिति सूक्तं गोमुखप्रसवे उक्तं । पावमान्यः । यद्देवादेवहेडनमिति तिस्रः कूष्मांड्यः । पुनंतुमेति नव-र्चो वा ॥ अभिषेकप्लुतं वस्त्रमाचार्याय प्रदापयेत् । श्वेतवस्त्रधरो भूत्वा भूषणाद्यैरलंकृतः । यजमानः स्त्रिया युक्त आ-ज्यावेक्षणमाचरेत् । आचार्यं पूजयेत्पश्चाद्वस्त्रहैमांगुलीयकैः । गोदानं वस्त्रदानं च स्वर्णदानं विशेषतः । तद्दोषशमनार्थाय आचार्याय प्रदापयेत् । प्रच्छादनपटं दद्यात्ततः शांतिर्भविष्यति । जापकेभ्यो ब्राह्मणेभ्यो दक्षिणाभिश्च तोषयेत् । जाप-

केभ्य ऋत्विग्भ्यः । दीनांधकृपणेभ्यश्च प्रदद्याद्भूरिदक्षिणाः । ब्राह्मणाञ्छतसंख्याकान्मिष्टान्नैर्भोजयेच्च तान् । तानृत्विजश्च । बंधुभिः सह भुंजीत यथाविभवसारतः । एवं यः कुरुते मर्त्यो नैव दुःखमवाप्नुयात् । आयुरारोग्यमैश्वर्यं मातापित्रोः शिशोरपि । सर्वदुःखनिवृत्तिश्च पुत्रपौत्रप्रवर्धनं । सर्वान्कामानवाप्नोति शांतिं कुर्वन्हि मानवः । । इति उत्तरगार्ग्योक्ता व्यतीपातवैधृतिसंक्रमणजननशांतिः ॥ ७ ॥ अथ प्रयोगः । तत्रादौ गोमुखप्रसवः । आच० । प्राणा० । पवित्रधा० । शांतिसूक्तपाठः । देशकालसंकीर्तनं । संकल्पः । [ ममास्य शिशोः व्यतीपातयोगे ( वैधृतियोगे ) ( अमुकरविसंक्रमणे वा ) जननेन उत्पत्स्यमानानां दारिद्र्यादिमहद्दुःखनानाव्याधिपीडादिमहद्भयअपमृत्युस्त्रीकर्तृकशोकदुःखादिअनेकारिष्टानां आदित्यादिग्रहजन्यसर्वारिष्टानां च विनाशनार्थं आदित्यादिग्रह रुद्र (सूर्य) देवतानुग्रहपूर्वकशुभाभीष्टसिध्यर्थं उत्तरगार्ग्योक्तां सग्रहमखां व्यतीपातयोग ( वैधृतियोग ) ( अमुकरविसंक्रमणयोग )जननशांतिं करिष्ये । इति तत्तन्निमित्तमनुसृत्य संकल्पः । व्यतीपाते वैधृतौ च संक्रमणदिनसंपाते शांतिद्वयं पृथक् पृथग् विधिना कार्यं । एकत्र रुद्रप्राधान्येनापरत्र सूर्यप्राधान्येन देवताभेदात् । व्यतीपातसंक्रमणयोः संपाते तु उभयत्र सूर्यप्राधान्येन देवताभेदाभावात्तंत्रेण शांतिः । । गणपतिपूजनादि अग्निप्रतिष्ठापनांतं । अग्नेः प्राच्यां गोमयोपलिप्तायां स्वलंकृतायां अर्धप्रमाणायां वेदिकायां भूमौ वा पंचद्रोणपरिमितव्रीहिभिः प्रथमः परिधिः । तदंतः सार्द्धद्विद्रोणतंडुलैर्द्वितीयः परिधिः । तदंतः सपादद्रोणतिलैस्तृतीयः परिधिः । तृतीयपरिधौ पंचरंगमष्टदलं । तत्र विधिना कलशप्रतिष्ठापनं । वासोयुग्मेन कलशस्य वेष्टनं ।

पूर्णपात्रोपरि आस्तृते सूक्ष्मवस्त्रे शक्त्यनुसारेण निष्कनिष्कार्धनिष्कार्धार्धसुवर्णनिर्मितासु प्रतिमासु अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं वैधृतिशांतौ मध्ये रुद्रं तद्दक्षिणे सूर्यं वामे चंद्रं च प्रतिष्ठाप्य, आवाह्य ध्यात्वा च ॐ भूर्भुवः स्वः त्र्यंबकं यजामहे० इति मंत्रेण रुद्रं १ ॐ उदुत्यं जातवेदसं० इति मंत्रेण सूर्यं २ ॐ आप्यायस्व समेतुते० इति मंत्रेण चंद्रं च ३ आसनादिषोडशोपचारैः पूजयेत्। पूजोपचारे, वस्त्रयुग्मं गुडनैवेद्यं इति विशेषः। व्यतीपातसंक्रमणशांत्योस्तु मध्ये सूर्यः १ तद्दक्षिणतोऽग्निः २ वामतो रुद्रः ३ ॐ उदुत्यंजातवेदसं० १ ॐ अग्निर्मूर्द्धादिवः० ॐ भूर्भुवः स्वः त्र्यंबकं यजामहे० ३ इति क्रमेण पूजामंत्राश्चेति विशेषः। । पूजामंत्राः, सर्वत्र होमादावपि व्याहृतिपूर्वा इति विशेषश्च। । पूजनांते वैधृतिशांतौ रुद्रप्रतिमां स्पृशन् प्रणवव्याहृतिपूर्वं त्र्यंबकं यजामह इति मंत्रं अष्टोत्तरसहस्रं १००८। अष्टोत्तरशतं १०८। अष्टाविंशति २८ वा जपेत्। ततः सूर्यप्रतिमां स्पृशन् चत्वारि ऋग्यजुःसामाथर्वणिकानि सौराणि सूक्तानि जपेत्। तानि च पौषे स्त्रीप्रथमप्रसूतिशांतौ द्रष्टव्यानि। व्यतीपातसंक्रमणशांत्योस्तु पूर्वं सौरजपस्ततो मृत्युंजयजपः । ततः सोमप्रतिमां स्पृशन् आप्यायस्व समेतुत इति सोममंत्रं सकृज्जपेत्। संख्याऽनुक्तेः। ततश्चत्वार ऋत्विजः कलशपरितः प्राच्यादिचतुर्दिक्षु कलशाभिमुखा उपविश्य कलशमालभ्य वक्ष्यमाणानि चत्वारि सूक्तानि क्रमेण सहैव सर्वे जपेयुः। प्राच्यादिक्रमेण एकैकस्यैकैकसूक्तजप इत्यन्ये। तानिच सूक्तानि। आनोभद्रादशर्चं प्रसिद्धमेव १ भद्राअग्नेरिति द्वादशर्चमाश्वलायनीयं कृष्णचतुर्दशीजननशांतौ द्रष्टव्यं २ सहस्रशीर्षेति पौरुषं सूक्तं षोडशर्चं प्रसिद्धमेव ३ नमस्ते रुद्र मन्यवइति षोडशोऽध्यायस्त्रैय्यं-

बकं रौद्रसूक्तं प्रसिद्धमेव ४ इति चत्वारि सूक्तानि । । सूक्तजपांते प्रधानपीठोत्तरतो ग्रहप्रतिष्ठापनं । रुद्रकलशप्रतिष्ठापनं च । । ततो दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि सिद्धचरुं प्रोक्षयित्वा आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । तत्र होम-द्रव्याणि । यज्ञियसमिधः १ आज्यं २ चरुः ३ इति त्रीणि ३ । प्रतिद्रव्यं प्रधानदेवताहोमसंख्या अष्टोत्तरसहस्रं १००८ अष्टोत्तरशतं १०८ । अष्टाविंशति २८ । वा । अधिप्रत्यधिदेवयोः प्रधानतोऽल्पसंख्या । होममंत्राः व्याहृतिपूर्वाः पूजोक्ताः । त्रिकहोमोत्तरं, मृत्युंजयमंत्रेण प्रधानहोमसंख्यापक्षमनुसृत्य तिलैर्होमः । अयं मृत्युंजयहोमस्तिसृष्वपि शांतिषु । तत उत्तरपूजनादि विसर्जनांतं । तत्राभिषेकमंत्राश्चैते । चतुर्ऋचं समुद्रज्येष्ठा इत्याश्वलायनीयं सूक्तं ज्येष्ठाजननशांतौ द्रष्टव्यं ॥ ४ ॥ आपोहिष्ठेति तिस्रः । षडर्चमक्षीभ्यामिति सूक्तं गोमुखप्रसवशांतौ द्रष्टव्यं ॥ ६ ॥ यद्देवादेवहेडनमितितिस्रः कूष्मांड्यः ३ पुनंतुमेति नवर्चो वा पावमान्यः । प्रधानाधिप्रत्यधिदेवतामंत्राः ॥ ३ ॥ सुरास्त्वेत्यादि पौराणमंत्राश्च ॥ अभिषेकांते स्नानं । आचार्यायाभिषेकवस्त्रदानं । आज्यावेक्षणं । सदक्षिणं तद्दानं च । वस्त्रहैमांगुलीयकैराचार्यपूजनं । विशे-षतोऽत्र दानानि । गोदानं । वस्त्रदानं । सुवर्णदानं । प्रच्छादनपट्टवस्त्रदानं । शतब्राह्मणभोजनं ॥ इति शुक्लयजुःशाखीयक-र्मकांडप्रदीपे जननशांतिककांडे उत्तरगार्ग्योक्तः सग्रहमखो व्यतीपातवैधृतिरविसंक्रमणयोगजननशांतिकप्रयोगः समाप्तः ।

अथ प्रसववैकृतशांतयः । तासां यमलवैकृतप्रसवशांतावंतर्भावात् प्रथमं यमलप्रसवशांतिरुच्यते तत्रादौ तन्मूलं कात्या-यनयमलजननशांतिकपरिशिष्टमुद्ध्रियते । । अथातो यमलजनने प्रायश्चित्तं व्याख्यास्यामो यस्य भार्यागौर्दासीमहिषीवड-

वा वा विकृतिं प्रसवेत्प्रायश्चित्ती भवेत्पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काषायमुपसंहरेत्प्लक्षवटौदुंबराश्वत्थशमीदेवदारुगौरसर्षपास्तेषाम्मिश्रमपो हिरण्यदूर्वांकुराम्रपल्लवैः प्रकल्प्य तैरष्टौ कलशान्प्रपूर्य सर्वौषधीभिर्दंपती स्नापयित्वा आपोहिष्ठेतितिसृभिः कयानश्चित्रइति द्वाभ्यां पंचैन्द्रेणं[1] पंचवारुणेनेदमापः[2] प्रवहतेत्यपाघमिति स्नापयित्वा "तौ स्नात्वाऽलंकृत्य" तौ दर्भोपर्युपवेश्य तत्र मारुतꣳस्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति पूर्वोक्तैः स्नपनमंत्रैः स्थालीपाकस्य जुहोति ॥ अग्नये स्वाहा सोमाय स्वाहा पवमानाय स्वाहा पावकाय स्वाहा मरुताय स्वाहा मारुताय स्वाहा मरुद्भ्यः स्वाहा यमाय स्वाहांऽऽतकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥ एतदेव ग्रहोत्पातेषूलूकः कंकः कपोतो गृध्रः श्येनो वा गृहं प्रविशेत्स्तंभं[3] वा प्ररोहेद्वल्मीकं मधुजालं वा भवेदुदकुंभप्रज्वलने आसनशयनयानभंगेषु गृहगोधिकाकृकलासशरीरसर्पणे छत्रध्वजविनाशे कूपोदकं गाङ्गीयैत्सार्पे नैर्ऋते गंडयोगे देवप्रसर्पणेष्वन्येषूत्पातेषु भूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वेतदेव प्रायश्चित्तं ग्रहशांतिं चोक्तविधिना कृत्वाऽऽचार्याय वरं दत्वा ब्राह्मणान् भोजयित्वा स्वस्ति वाच्याशिषः प्रतिगृह्य शांतिर्भवति शांतिर्भवतीति ॥ इति निरग्निकस्य यमलजननप्रायश्चित्तपरिशिष्टं ॥ १ ॥

श्रीः । अथाहिताग्नेर्यमलप्रसवप्रायश्चित्तं । कात्यायनश्रौतसूत्रे ॥ "भार्या गोषु यमलजनने मारुतं त्रयोदशकपालं निर्वपेत्" ।२५।४।३४। इति आहिताग्नेर्यमलप्रसवप्रायश्चित्तं ॥ २ ॥



---

१–'पंचैन्द्रैः' इति निबंधधृतः पाठः । २–'पंचवारुणैः' इति निबंधधृतः पाठः । ३–'स्तम्भः प्ररोहेत्' इत्ययमपि निबंधधृतः पाठः ।

श्रीः । अथानाहिताग्नेः कात्यायनयमलप्रसवप्रायश्चित्तपरिशिष्टं ॥ अथ यमलचरुं मारुतं व्याख्यास्यामो यस्य च यमलौ पुत्रौ दारिके वा प्रजायेते पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काषायमाहृत्याश्वत्थप्लक्षन्यग्रोधौदुंबराश्चत्वारोऽविधवाः स्नापयंति ब्रह्मचारिणो वा शुक्लवासस ऐंद्रीं दिशमुदीचीं वा मंगलं पूर्ववद्गायंत्यो यमलिनीः स्नापयंत्याचार्यः स्नपयति वसोः पवित्रेण शतधारेण चाष्टभिः कलशैः स्नात्वाऽप्रतिरथं जपेदिदमापः प्रवहत इति तौ स्नापितौ वरं प्रयच्छत्यानडुहं मातृभ्यश्च हिरण्यं वस्त्रमेव परितोषणं वाजेवाजेवत इति जपत्याघारं मारुतं जुहोति मरुतायस्वाहा मरुद्भ्यो विष्णवे प्रजापतये विश्वेभ्योदेवेभ्योऽग्नये स्विष्टकृते स्वाहेति प्राशनांते शेषचरुं गृहीत्वाऽश्वत्थं प्रदक्षिणीकृत्योपविशेत्तदेव तन्त्र समाप्य ततो ब्राह्मणभोजनं ॥ ॥ इति अनाहिताग्नेर्यमलप्रसवप्रायश्चित्तपरिशिष्टं ॥ ३ ॥ श्रीः । अथ कात्यायनयमलजननप्रायश्चित्तपरिशिष्टभाष्यं । यामलचरुपरिशिष्टभाष्यं च ॥ नत्वेभास्यं श्रियं देवीं रेणुकां कुलदेवतां ॥ आत्याजीभट्टजनुषा अण्णाशास्त्रीति शर्मणा ॥ १ ॥ वारेइत्युपनाम्ना वै नासिकक्षेत्रशालिना ॥ व्याख्यते यामलं सूत्रं कातीयं परिशिष्टकं ॥ २ ॥ "अथातो यमलजनने प्रायश्चित्तं व्याख्यास्यामः" ॥ १ ॥ अथेति यमलजननदोषोपशमनोपक्रमेऽयमथशब्दः । अतइति हेत्वर्थे । यतो "यमलजनने प्रायश्चित्तं व्याख्यास्याम" इति यमलजनने प्रायश्चित्तोक्त्या तज्जनने वैकृतं दुष्टं फलं बोध्यते अतस्तस्माद्धेतोरिति । यमलजननं संततियुगुलप्रसवः । तथाच शातपथी श्रुतिः । "अथ श्वोभूते संगृहीतुर्गृहान् परेत्य आश्विनं द्विकपालं पुरोडाशं निर्वपति सयोनी वा अश्विनौ सयोनी सव्यष्टृसारथी समानह-

हिरथमधितिष्ठतस्तस्मादाश्विनो भवत्येतद्वा अस्यैकꣳरत्नं यत्संगृहीता तस्माऽअणवे तेन सूयते तꣳस्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि सयोनी यद्यमौ यदि यमौ न विंदेदप्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां ता उह्यपि समानयोनी ॥ ७ ॥ इति । ५ । ३ । १ । ७ । । अथात्र सायनाचार्यभाष्यं । । राजसूये द्वादशरत्नेष्टिप्रकरणे अष्टमी रत्नेष्टिरियमाश्विनीष्टिः । अष्टमदिवसकर्तव्यामिष्टिं विधत्ते "अथ श्वोभूत इति संगृहीतुर्गृहानिति" । संगृहीतानाम रथसंयोजिता । आश्विनमश्विदेवत्यं । संगृहीतृगृहे आश्विनहविषोऽपि निर्वापे कारणमाह । "सयोनी वा अश्विनाविति ।" "हि" यस्मात् । "सव्यष्टृसारथी" सव्यष्टृपदेन संगृहीतोच्यते स च सारथिश्च । सयोनी समानस्थानौ एवमश्विनावपि सयोनी सहोत्पन्नौ तौ द्विविधौ समानमेकं रथमधितिष्ठतः । "एवं कविष्टः पर्यश्विना"विति श्रवणात् । आश्विनहविषो योग्यां दक्षिणां विधत्ते । "तस्य यमाविति" यमौ हि सहैव एकस्यामातुर्गर्भादुत्पन्नौ । यमयोरश्विसाम्यमाह । "तौ हि सयोनी यद्यमावि"ति । यमयोरलाभे पक्षांतरमाह । "यदि यमाविति" । "अनूचीनगर्भौ" अनुक्रमेण पौर्वापर्येण जातगर्भौ । तयोरपि समानयोनित्वं दर्शयति । "ता उहीति" । यौ क्रमेणोत्पन्नौ तावपि हि सयोनीमध्ये गर्भांतरेणाव्यवहितत्वात् । इति सायनभाष्यं । ।एवंच ययोरुभयोर्गर्भयोरेकस्मिन्नेव काले सह पौर्वापर्येण वोत्पत्तिः तावुभौ गर्भौ यमलाविति श्रुतिसमुदितं द्विविधं यमललक्षणं । । तत्र सहोत्पत्तौ "सयोनी वा अश्विनावि"ति श्रुतिर्मूलं । पौर्वापर्येणोत्पत्तौ "यदि यमौ न विंदेदप्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां" "ता उह्यपि समानयोनी" इति श्रुतिर्मूलं ॥१॥ तद्यमलं पुंरूपं[1] स्त्रीरूपं[2] पुंस्त्री[3]-

रूपं चेति त्रिधा। तथाचानाहिताग्नियामलपरिशिष्टं। "यस्य च यमलौ पुत्रौ दारिके वा प्रजायेते" इति। पुत्रावित्यत्र पुत्रश्च पुत्रश्चेति सरूपैकशेषः तथा पुत्रश्च पुत्री चेति विरूपैकशेषश्च। तथाऽमरोऽपि। पुत्रौ पुत्रश्च दुहिता चेति। दारिके कन्ये। यमलजननेन "व्याघातसूतिश्च" इतिमुहूर्ततत्त्ववचनात् त्रिचतुरादिप्रसवोऽपि बोध्यः। काशीखंडेऽपि। "त्रिविधा यमलोत्पत्तिर्जायते योषितामिह॥ सुतौ च सुतकन्ये च कन्ये एव तथा पुन"रिति। फलमपि तत्रैव। एकलिंगौ विनाशाय द्विलिंगौ मध्यमौ स्मृतौ॥ पित्रोर्विघ्नकरौ ज्ञेयौ तत्र शांतिर्विधीयते॥ इति॥ यमलजनने इति निमित्तसप्तमी। यमलजननोपक्रमे "यस्य भार्यागौरि"त्याग्निमसूत्रे "विकृतिं प्रसवेदि"ति वैकृतप्रसवापादनात् प्रसववैकृतं यमलजननं सर्ववैकृतप्रसवोपसंग्राहकं। तेचानेकविधाः। मात्स्ये। अकालप्रसवा नार्यः कालातीतप्रजास्तथा। विकृतप्रसवाश्चैव युग्मप्रसवकास्तथा। अमानुषा "अमुंडाश्च" "अजातव्यंजना"स्तथा। "अमुंडाः"। मुंडं शिरो नास्ति येषां ते अमुंडाः अशीर्षकाः। "कुष्टं मुंडं शीधुबुस्त" मित्यमरः। "अजातव्यंजनाः" प्रजननलिंगरहिताः। हीनांगा अधिकांगाश्च सूयंते यदि वा स्त्रियः। पशवः पक्षिणश्चैव तथैव च सरीसृपाः। विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेदिति। वृद्धगर्गः। भारते मयूरचित्रे च। यत्र गर्भे विपर्यासो मानुषाणां गवामपि। अद्भुतानि प्रसूयंते तत्र देशस्य विप्लवः। मानुषामानुषाणां च गोऽजाश्वमृगपक्षिणां। यमलानि च जायंतेऽशुभानि "नीचवक्त्रकाः"। "मुंडा" वक्रमुखाश्चैव "कुटास्याः" "कुणपा"स्तथा। जायंते "जातिभेदा"श्च "सदंता" विकृतास्तथा। जायंते "उपरिदंता" अश्ववद्विकृताननाः। बहुशीर्षा अशीर्षा वा बहुकर्णा अकं-

र्णकाः । एकशृंगास्त्रिशृंगाश्चाभुजाश्च त्रिचतुर्भुजाः । दीर्घकर्णा महाकर्णा अजकर्णा विकर्णकाः। विकर्णका (विपरीतकर्णाः) मानवाः श्वापदव्याघ्रमार्जारतनुधारिणः । व्यालव्याघ्रमुखाकारं बिडालमुखमुन्नतं । ईदृशानि स्वरूपाणि दृश्यंते यत्र गौतम । तत्र संग्रामतो ब्रूयाद्भयं क्षयकरं महत् । जनक्षयं च पौराणां राज्ञः श्रेणिवधं तथा । तत्र शांतिं प्रवक्ष्यामि सर्वपापप्रणाशिनीं। इति । "नीचवक्रका" अधोमुखाः । अधोमुखजनने फलं बृहच्छौनकीये। प्रसवेत्तु यदा नारी बालकं तु अधोमुखं । वंशारिष्टकरं चैव मातापित्रोर्विशेषतः। बालकं तु परित्यज्य यावच्चूडोपकर्मणि । मातापित्रोर्विशेषेण तन्मुखं नावलोक्यते । मातापित्रोरिति कर्तरि षष्ठी । तस्यारिष्टविनाशाय कुर्याच्छांतिं यथाविधि । जन्माच्च द्वादशाहे च प्रयत्नेन च कारयेत् । अथवा जन्मदिवसे शुभे काले शुभे दिने इति । मातृपित्रारिष्टत्वादत्र गोमुखप्रसवः । मुंडाः मुंडितवत्केशरहितशिरस्काः । मुंडस्तुमुंडिते इत्यमरः । "कुटास्याः" । कुटो घटः । तथाचामरः । कलशस्तु त्रिषु द्वयोः । घटः कुटनिपावस्त्रीति । घटाकारमुखाः । "कुणपाः" । निर्जीवाः । शवा इत्यर्थः । कुणपः शवमस्त्रियामित्यमरः । जातिभेदाः । जात्यंतरलक्षणांकिताः । "सदंताः" । "उपरिदंताश्च" । प्रथममुपरि दंतजननं तथा द्वितीयतृतीयचतुर्थपंचमषष्ठाष्टममासेषुच प्रथमं दंतजननं च येषां ते उपरिदंताः । सदंतजननादौ फलं । पाद्मे विष्णुधर्मोत्तरे च पुष्करः । दंतजन्मनि बालानां लक्षणं तन्निबोध मे । उपरि प्रथमं यस्य जायंते च शिशोर्द्विजाः । द्विजा दंताः। दंतविप्राण्डजा द्विजा इत्यमरः। दंतैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम। द्वितीये च तृतीये च चतुर्थे पंचमे तथा । यदा दंताश्च जायंते मासि चैव महद्भयं । मातरं पितरं चैव

खादेदात्मानमेवचेति । खाद भक्षणे ॥ तथा अद्भुतसागरे बृहस्पतिः । बालानामष्टमे मासि षष्ठे मासि ततः पुनः । दंता यस्य च जायंते माता वा म्रियते पिता । बालकः पीड्यते तत्र स्वयमेव न संशय इति । सप्तममासस्तु तदुत्पत्तिकालत्वाच्छुभः । केचित्तु "अष्टमादिषु मासेषु दंतोत्थानं शुभावह"मिति ज्योतिर्निबंधोक्तेरष्टमे दंतजननं शुभमिति वदंति । तदनादरणीयं । ज्योतिर्निबंधोक्तौ अतद्गुणसंविज्ञानबहुव्रीहिणा नवमादयो मासाः शुभा इत्यर्थोपलब्ध्या अष्टमस्याशुभत्वस्य सुस्थत्वादिति । सदंतजननानंतरं अदंतजननानंतरंवाऽपरि प्रथमं दंतोत्पत्तौ च । यामलोक्ता शांतिः । मातृपित्रारिष्टत्वाद्गोमुखप्रसवश्च । । सदंतजननोत्तरं पुनरुपरि प्रथमं दंतोत्पत्तौ । तथा द्वितीयादिपंचमांतान्यतरमासे पुनर्दंतोत्पत्तौ च वैकृतप्रसवाभावान्न यामलोक्ता शांतिः । किंतु । साप्ताहिकी पाद्मविष्णुधर्मोत्तरोक्तैव । सा तत्र तदग्र एवोदिता । तत्र शांतिं प्रवक्ष्यामि तां मे निगदतः शृणु । गजपृष्ठगतं बालं नौस्थं वा स्नापयेद्द्विज । तदभावे तु धर्मज्ञ कांचने तु वरासने । सर्वौषधैः सर्वगंधैर्बीजैः पुष्पैः फलैस्तथा । पंचगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव । स्नापयेदित्यन्वयः । स्थालीपाकेन धातारं पूजयेत्तदनंतरं । सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनं । अष्टमेऽहनि विप्राणां तथा देयाऽत्र दक्षिणा । कांचनं रजतं गां च भुवं च धनमेवचेति । । देवताऽत्रधाता । हौम्यं चरुः । तथेति समुच्चये । तेन सप्तदिनपर्यंतं बालकस्नापनपूर्वकं विप्रभोजनसहितं स्थालीपाकेन होमरूपं धातुराराधनं । मंत्रो"धातारातिःसवित"ति ।८।१७। पित्राद्यरिष्टत्वाद्गोमुखप्रसवश्च । षष्ठाष्टमयोस्तु पुनर्दंतोत्पत्तौ बृहस्पत्युक्ता शांतिः । साचाद्भुतसागरे फलकथनानंतरोदिता । दधिक्षौद्रघृ-

ताक्तानामश्वत्थसमिधां तथा । हुनेदष्टशतं प्राज्ञस्तन्मंत्रेण च मंत्रवित् । धेनुं च दक्षिणां दद्यात्ततः संपद्यते शुभमिति । क्षौद्रं मधु । अत्र बृहस्पतिर्देवता बृहस्पतिमंत्रेण होमश्चेति धर्माब्धिः । परं तद्ग्रहणे मूलाभावात्तद्विवेचनीयं । मासप्रकरणात् पाद्मविष्णुधर्मोत्तरोक्ता धाता देवतेति साधु । हौम्यं दधिमधुघृताक्ताः अश्वत्थसमिधः । होमसंख्यात्वष्टशतं।१०८। "धातारातिःसवितेति" ।८।१७। धातृदेवत्यो मंत्रः । पित्राद्यारिष्टत्वाद्धोमुखप्रसवः । । दंतजननसामान्यविधानांतरं पंचदशीशांतिरद्भुतसागरे पाद्मे इत्युपक्रम्योक्ता । । दंतजन्मनि सामान्ये शृणु स्नानमतःपरं । भद्रासने निवेश्यैनं मूर्ध्नि मूलफलैस्तथा । सर्वौषधैः सर्वबीजैः सर्वगंधैस्तथैवच । स्नापयेत्पूजयेच्चात्र वह्निं सोमं समीरणं । पर्वतांश्च तथाख्यातान् देवदेवं च केशवं । एतेषामेव जुहुयाद्धुतमग्नौ यथाविधि । ब्राह्मणाय च दातव्या यथाशक्त्यातु दक्षिणेति । । अत्र प्राधान्येनोपचाराः पंचदश १५ ॥ अतः पंचदशीत्युच्यते । तच्च । भद्रासनं १ मूलानि २ फलानि ३ सर्वौषधानि ४ सर्वबीजानि ५ सर्वगंधाः ६ अग्निः ७ सोमः ८ वायुः ९ हिमाचलादयः प्रसिद्धाः पर्वताः १० विष्णुः ११ एताः पंच देवताः । हौम्यं घृतं १२ होमार्थोऽग्निः १३ ब्राह्मणः १४ दक्षिणा १५ चेतिपंचदश । अथसमुपरि दंतोत्पत्तौ मातुलकर्तृकाऽपिशांतिः । ब्रह्मयामले । । प्रथमं दंतनिर्मुक्तिरूर्ध्वं बालस्य चेद्भवेत् । क्लेशाश्च मातुलस्येह तदा प्रोक्ता मनीषिभिः । सौवर्णं राजतं वापि ताम्रं कांस्यमयं तु वा । दध्योदनेन संपूर्णं पात्रं दद्याच्छिशोः करे । समंत्रं भाजनं दत्वा सपश्येन्मातुलः शिशुं । सालंकारं सवस्त्रं च शिशुमालिंग्य सादरं । दध्योदनपात्रदानमंत्रः । रक्ष मां भागिनेय त्वं रक्ष मे सकलं कुलं ।

गृहीत्वा भाजनं सान्नं प्रसन्नो भव सर्वदा । निर्विघ्नं कुरु कल्याणं निर्विघ्नां च स्वमातरं । मय्यात्मानमधिष्ठाप्य चिरं जीव मया सह । एवं कृते विधाने तु विघ्नः कोऽपि न जायते इति । । पादजातोऽपि वैकृतप्रसवः । तथाह वसिष्ठः । तद्वत्सदंतजाताश्च पादजातास्तथैवच । विपरीतप्रसूतास्तु नाभिनालेन वेष्टिताः । इति । अत्रापि शांतिर्यामलोक्तैव । । "प्रायश्चित्तं व्याख्यास्यामः" । प्रायो नाम वैकृतयामलादिप्रसवजन्यैहिकामुष्मिकानिष्टात्मको दोषः । चित्तं तद्दोषापनोदनं शांतिकं कर्म । व्याख्यास्याम इति प्रतिज्ञा । बहुवचनं सर्ववैदिकाचार्यमतेन । अतएव हेमाद्रिकमलाकरमयूखकारादिनिबंधकर्तृणामत्रादरः । "यस्य भार्या गौर्दासी महिषी वडवा वा विकृतिं प्रसवेत्प्रायश्चित्ती भवेत्" ॥ २ ॥ यस्येति संबंधे षष्ठी । यत्संबंधिनीत्यर्थः । भार्या पत्नी । गौर्धेनुः । दासी दासपत्नी । दासलक्षणमाह नारदः । "गृहजात १ स्तथा क्रीतो २ लब्धो ३ दायादुपागतः ४ । अन्नाकालभृत ५ स्तद्वदाहितः ६ स्वामिना च यः । मोक्षितो ७ महतश्चर्णाद्युद्धप्राप्तः ८ पणेजितः । ९ तवाहमित्युपगतः १० प्रव्रज्यावसितः ११ कृतः १२ । भक्तदासश्च १३ विज्ञेयस्तथैव वडवाहृतः । १४ विक्रेताचात्मनः १५ शास्त्रे दासाः, पंचदश स्मृता" इति । एतदर्थो निर्णयसिंधुटीकायां दासाशौचप्रकरणे समालोच्यः । । महिषी सैरिभी । लुलायो महिषो वाहद्विषत्कासरसैरिभाइत्यमरः । वडवा अश्विनी । वडवा उष्ट्र्यजागजिनीनामुपसंग्राहिका । "वडवोष्ट्रीमहिष्यजागोहस्तिनीषु यमलोद्भवे मरणमेषा"मिति वाराहसंहितोक्तेः । "विकृतिं प्रसवेदि"ति । प्रकृतिः स्वाभाविकत्वं । विकृतिस्तदन्यादृक्त्वं । द्विशिरस्काद्यधिकांगशीर्षपादादिन्यूनांगादिविकृतिं प्रसवेत् । ताश्च विकृतयः प्राक्

मात्स्यगार्ग्याद्युक्ता अनुसंधेयाः। यत्तु विकृतिं प्रसवेद्यमलौ जनयेदिति शांतिसारकृद्भिर्व्याख्यातं। तन्न साधु। अथातो यमलजनने इत्युपक्रमात्तदर्थसिद्धेः। "प्रायश्चित्ती भवेत्"। यत्तदोर्नित्यसंबंधात्तच्छब्दाध्याहारेण सः भार्यागवादीनां स्वामी प्रायश्चित्ती तद्दोषापनोदकशांतिकर्मकर्ता भवतीति। अनेनाधिकारी अधिक्रियते। २। "पूर्णे दशाहे"। ३। एकादशाहे इत्यर्थः। इति शांतिककालः। विधिमाह। "चतुर्णांक्षीरवृक्षाणां काषायमुपसंहरेत्। ४। चत्वारः क्षीरवृक्षाः यामलचरुपरिशिष्टे। "चतुर्णां क्षीरवृक्षाणां काषायमाहृत्याश्वत्थप्लक्षन्यग्रोधौदुंबराश्चत्वार इति"। अश्वत्थप्लक्षन्यग्रोधौदुंबराणां चतुर्णां वृक्षाणां त्वक्पल्लवीयकषायमुपसंहरेत्। एकत्र संमिश्रं कुर्यात्। न पृथग् पृथगिति। एकवचनेनोपसंहारात्। काषायमिति स्वार्थेऽण्। प्लक्षवटौदुंबराश्वत्थशमीदेवदारुगौरसर्षपास्तेषां मिश्रमपो हिरण्यदूर्वांकुराम्रपल्लवैः प्रकल्प्य" ।५। प्लक्षवटादयः प्रसिद्धाः। तेषामपः क्षीराणि। गौरसर्षपाः स्वरूपत एव। तेषां क्षीरवत्त्वाभावात्। हिरण्यदूर्वांकुराम्रपल्लवैः सह मिश्रं यथास्यात्तथा। प्रकल्प्य कृत्वा। । "तैरष्टौकलशान्प्रपूर्य सर्वौषधीभिः" ॥ ६ ॥ तैः कषायेण हिरण्यादिमिश्रितक्षीरैः सर्वौषधीभिश्च अष्टौ कलशान्प्रपूर्य। सर्वौषध्यश्च मूलजननपरिशिष्टे उक्ताः। अग्रे स्नापनविधानात् कर्ममंडपात्प्रागुदग्वा स्नानमंडपे स्नानार्थभद्रपीठस्य परितः प्रागादिक्रमेण महीद्यौरित्यादिविधिना अष्टौ कलशान् प्रतिष्ठाप्य पूजयेत्। स्नापनविधिमाह। "दंपती स्नापयित्वाऽऽपोहिष्ठेतितिसृभिः कयानश्चित्रइतिद्वाभ्यां पंचैंद्रेण पंचवारुणेनेदमापःप्रवहतत्यपाघमिति स्नापयित्वा" ॥ ७ ॥ यामलचरुपरिशिष्टंच। "अविधवाः स्नापयंति ब्रह्मचारिणो वा शुक्लवासस

ऐंद्रीं दिशमुदीचीं वा मंगलं पूर्ववद्गायंत्यो यमलिनीः स्नापयंत्याचार्यः स्नापयति वसोःपवित्रेण शतधारेण चाष्टभिः कलशैरिति"। स्नापयित्वेति क्त्वाप्रत्ययस्य पूर्वकालार्थवत्त्वेन क्रमबोधकतया समानकर्तृकत्वार्थवत्त्वेनच यामलचरुपरिशिष्टीया "चार्यः स्नापयती"ति सूत्रेण समन्वयः। पाठक्रमादर्थक्रमस्य बलीयस्त्वात्। "अविधवाः स्नापयंति ब्रह्मचारिणो वा शुक्लवाससः"। अविधवाः। विपरीताः शास्त्रविरुद्धाःधवाः पतयोजारादयोयासांताअविधवाः। तदितराः पतिपुत्रवत्यः स्त्रियः। ब्रह्मचारिणः अकृतसमावर्तनाः। शुक्लवासस इत्युभयलिंगत्वादुभयोरुपसर्जनं। उभये अपि परिहितशुक्लवाससः। स्नापने कर्तृविकल्पः। तच्च स्नापनंताभिस्तैर्वा आचार्यः कारयति। "मंगल"मिति गायनस्नापनयोः क्रियाविशेषणं। तेन च सुगंधतैलेन सर्वौषध्यादिना चोद्वर्तनं नीराजनं मंगलगानं मंगलवाद्यघोषश्च विधीयते। पूर्ववदिति वतिनातन्मंगलगानं सीमंतोन्नयनवद्राजगायनं वीरतरगायनं वा अतिदिश्यते। न वीणागाथिकर्त्रतिदेशः। गायंत्य इति स्त्र्युपसर्जनेन तासामेव गाने कर्तृत्वात्। नापि नियुक्तगाथागानातिदेशः। नियुक्तगाथायास्तत्रैव विनियोगात्। "ऐंद्रीं दिशमुदीचीं वेति"। अत्राभिमुखीमिति शेषः। तच्च यमलिनीविशेषणं। प्राङ्मुखीमुदङ्मुखीं वा यमलिनीं स्नापयंतीति। यमलिनीं यमलप्रसववतीं। "दंपती स्नापयित्वे"ति स्नापनं सहैव युगपत् द्योत्यते। तथापि यमलिनीं स्नापयंतीति विशेषोपदेशात् प्रथमं यमलप्रस्वाः पश्चात्तत्पत्युः। दंपतीपदेऽपि एकशेषेण प्रथमं जायानिर्देश एव। अमरोऽपि तदेव बोधयति। "दंपती जंपती जायापती भार्यापती च ता"विति। द्रव्यानुपदेशादेतत्स्नापनं लौकिकोष्णोदकेन। "आचार्यः

स्नापयति वसोः पवित्रेणशतधारेणचाष्टभिः कलशैरि"ति । मंगलस्नापनादनंतरं आचार्यः स्वयं स्नपयति अभिषिंचति । "वसोःपवित्रेणशधारेण" । वसु सुवर्णं । "वसुर्मयूखाग्निजनाधिपेषु योक्त्रे सुरे स्याद्वसु हाटकेषु" इति विश्वप्रकाशात् । पवित्रं महाराष्ट्रभाषया(चालनी) इति । तत्कुतः । शतधारेणेति तद्विशेषणात् । शतशब्दो अनंतवाची । असंख्यातधारेण पवित्रेण चालन्येत्यर्थः । "अष्टभिः कलशैरि"ति । तेभ्यश्चोद्धृतैरुदकैरित्यर्थः । तद्विना पवित्रेण स्नपनस्यासंभवात् । तदु-द्धरणं अर्थाद्वसुपवित्रे । वसुपवित्रस्य स्नपने करणत्वात् । उदकं विना तेनापि स्नपनस्यासंभवाच्च । आचार्येण पठ्यमानान् स्नपनमंत्रानाह । "आपोहिष्ठेतितिसृभिः" शांत्यध्यायपठिताः दध्यङ्ङाथर्वणदृष्टाः अब्दैवत्याः गायत्र्यः, आपोहिष्ठेतितिस्रः ॥ ३ ॥ "कयानश्चित्रइति द्वाभ्यां" शांत्यध्यायपठिते वामदेवदृष्टे ऐंद्र्यौ गायत्र्यौ कयानश्चित्र इति द्वे ॥ २ ॥ "पंचैंद्रेण" पंच ऐंद्राणि पदानि यस्यामृचि स पंचैंद्रो ऋङ्मंत्रः, । स च विंशाध्यायस्थो गर्गदृष्टो ऐंद्रस्त्रिष्टुप्छंदस्कः त्रातारमिंद्रमिति ॥ १ ॥ "पंचवारुणेन" पंच वारुणानि यजूंषि यस्मिन्कंडिकामंत्रे स पंचवारुणः । अथवा । पंचानां वारुणानां यजुषां समाहारः पंचवारुणं । "सर्वो द्वंद्वो विभाषैकवद्भवति" । पंच वारुणानि यजूंषीति यावत् । तानि । चतुर्थाध्यायपठितानि सौमिकानि प्रजापतिदृष्टानि वरुणदैवतानि पंच यजूंषि वरुणस्योत्तंभनमसीत्यादीनि ॥ ५ ॥ अत्र "पंचैंद्रैः पंचवारुणै" रिति बहुवचनांतोऽपि पाठो दृश्यते । तथापाठे । पंच च ते ऐंद्रा ऋङ्मंत्राः तैः पंचैंद्रैरिति कर्मधारयः । ते च विंशाध्या-यपठिता आयात्विंद्रेत्यनुवाकीयाः प्रजापत्यश्विसरस्वतीदृष्टाः ऐंद्रास्त्रिष्टुभ आयात्विंद्रेत्यादयः पंच ऋङ्मंत्राः ॥५॥ अथवा ।

पंच च तानि ऐंद्राणि यजूंषि इति कर्मधारय एव। तानि पंचमाध्यायपठितानि प्रजापतिदृष्टानि इंद्रस्यस्यूरसीत्यादीनि पंच ॥ ५ ॥ एवं पंचवारुणैरित्यत्रापि पंच च ते वारुणा ऋङ्मंत्रास्तैः पंच वारुणैरिति कर्मधारय एव। ते च। द्वादशाध्यायपठिता शुनःशेपदृष्टा वरुणदैवत्या त्रिष्टुप् उदुत्तममित्येका ॥ १ ॥ एकविंशाध्यायपठिते शुनःशेपदृष्टे वरुणदैवत्ये क्रमेण गायत्रीत्रिष्टुभौ इमंमेवरुण तत्वायामि इतिद्वे ॥ २ ॥ षट्त्रिंशाध्यायपठिता दध्यङाथर्वणदृष्टा लिंगोक्तदेवताकत्वाद्वरुणदैवत्याऽपि अनुष्टुप् शन्नोमित्र इत्येका ॥ १ ॥ षट्त्रिंशाध्यायपठिता आथर्वणदध्यङ्दृष्टा आपो गायत्री शन्नोदेवीरित्येका ॥ १ ॥ एवं पंच वारुणा ऋङ्मंत्राः ॥ ५ ॥ पाठभेदाद्यथारुच्यनुष्ठानं । "इदमापःप्रवहते"तिचतुर्थाध्यायपठिता सौमिकी प्रजापतिदृष्टा आपी पावमानांत्यपादा अष्टाक्षरषट्पादा अष्टचत्वारिंशाक्षरा। महापंक्तिः इदमापःप्रवहतेत्येका ॥१॥ "अपाघमिति"पित्र्याध्यायपठिता शुनःशेपदृष्टा लिंगोक्तदेवताका अनुष्टुप् दुःस्वप्ननाशिनी अपाघमपकिल्बिषमित्येका॥ १ ॥ यत्तु पंच ऐंद्रा मंत्रा यस्मिंस्तत्पंचैंद्रं सूक्तं एवं पंच वारुणं सूक्तं अपाघमिति अपनः शोशुचदघमित्यष्टर्चसूक्तमिति कौस्तुभकृद्व्याख्यानं तद्धेयमेव वाजसनेयकेवेदे ईदृग्लक्षणसूक्तानामभावात्। "तौ स्नात्वाऽलंकृत्य" ॥ ७ ॥ अत्र यामलचरुपरिशिष्टं। "स्नात्वाऽप्रतिरथं जपेदिदमापःप्रवहतेति" स्नानादनंतरं दंपती वस्त्रचंदनकुंकुमादि सौभाग्यसौवर्णाद्यलंकारैर्भूषितौ भूत्वा यमलप्रसूपतिः अप्रतिरथं सूक्तं आशुःशिशानइतिसप्तदशर्चं इदमापःप्रवहतेतिऋचं च जपेत्। "अश्वत्सु जपेदि"ति श्राद्धसूत्रे अप्रतिरथमाशुःशिशान इति सप्तदशेति कर्कः। तच्च सप्तदशाध्यायपठितं आग्निकं अप्रतिरथनामा इंद्रपुत्रः तेन दृष्टं

ऐंद्रं द्वादश त्रिष्टुभः त्रयोदशी इषुदेवत्या अनुष्टुप् चतुर्दशी अनुष्टुप् पंचदशी मारुती त्रिष्टुप् षोडशी लिंगोक्तदेवता पंक्तिः सप्तदशी लिंगोक्तदेवता त्रिष्टुप्। अत्र "यामलचरुपरिशिष्टं। तौ स्नापितौ वरं प्रयच्छत्यानुडुहं मातृभ्यश्च हिरण्यं वस्त्रमेव परितोषणं" "वाजेवाजेइति जपति"इतिच। तत आचार्याय आनुडुहं वरं यमलिनीपतिः प्रयच्छेत्। मातृभ्यश्च हिरण्यं कंठे बध्यमानसौभाग्यमांगल्यतंत्वलंकरणादि। वस्त्रं कंचुक्यादिच परितोषणं पारितोषिकं। एवकारेण इदमेव विधीयते। तच्च यमलिनी प्रयच्छति "तौ स्नापिताविति" उभयोः कर्तृत्वेन प्रत्यासत्त्या व्यवस्थितिरियं। मातृभ्यश्चेति बहुत्वात् मातृतुल्याभ्यः सपत्नमातृपितृष्वसृमातृष्वस्रादिभ्योऽपि तद्दानं द्योत्यते। आदरार्थं बहुवचनं वा। "अलंकृत्ये"त्यत्र "निरूप्याज्यं वेदोसीति यजमानोवेदं करोती"तिवत् क्त्वास्थाने पूर्वकालिको ल्यबादेशः। ततश्च स्नानोत्तरमलंकरणाप्रतिरथादिजपयोर्युगपत्प्राप्तावपि असंभवात् क्रमापेक्षायां पूर्वमलंकरणं, तत अप्रतिरथादिजप इतिप्रयोगक्रमोऽवसीयते। "वाजेवाजेइति जपति"। ऋचमितिशेषः। सा नवमाध्यायपठिता वाजपेयिकी वसिष्ठदृष्टा अश्वदेवत्या त्रिष्टुप्॥ तौ दर्भोपर्युपवेश्यौ" ॥ ८ ॥ उपवेश्येतिणिजंतं। ततश्चाचार्यस्तौ उपवेशयति। उपवेशनं अग्रिमसूत्रे जुहोतीत्युपदेशात् होमार्थमग्नेः पश्चात् दृष्टार्थमेव। "तत्र मारुतꣳस्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति पूर्वोक्तैः स्नपनमंत्रैस्स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहा पवमानाय स्वाहा पावकाय स्वाहा मरुताय स्वाहा मारुताय स्वाहा मरुद्भ्यः स्वाहा यमाय स्वाहाऽन्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहाऽग्नये स्विष्टकृते स्वाहेति" ॥ ९ ॥ तथात्र यामलचरुपरिशिष्टं च "आघारं मारुतं चरुं जुहोति मरु-

ताय स्वाहा मारुताय स्वाहा मरुद्भ्यो विष्णवे प्रजापतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृते स्वाहेति" ॥ मारुतं स्थालीपाकं श्रपयित्वे"ति "मारुतं चरुं जुहोती"तिचेत्युभयत्र मारुतमिति ताद्धितनिर्देशात् मरुतस्य हविर्भाक्त्वाच्चेदं मरुतदैवतं कर्म। ततश्च मरुतदेवताधिवासनं। तथाह सर्वानुक्रमणीकारः। "परमेष्ठ्यादयो देवता मंत्रांतर्भूताऽध्यात्मिक्यादिका हविर्भाजः स्तुतिभाजो वा अनःशाखोखाश्मयोपवेषकपालेध्मोलूखलादयश्च प्रतिमाभूता इति"। तंत्रवार्तिकेऽपि। तद्धितेन चतुर्थ्या वा मंत्रवर्णेन वा पुनः। देवताया विधिस्तत्र दुर्बलं तु परंपरमि"ति।२।३।३। "श्रपयित्वेति"माभूत्तद्भूतोपादानं। आघारमिति णमुलंतं। आघार्याघार्येति। द्वावाघारौ हुत्वेत्यर्थः। पंचैंद्रेण पंचवारुणेन इत्येकवचनांतपाठे स्नपनमंत्राश्चतुर्दश ॥ ४ ॥ अतस्तन्मंत्रैराज्याहुतयश्चतुर्दश ॥ १४ ॥ बहुवचनांतपाठे तु सप्तदश मंत्रास्तदाहुतयश्च ॥ १७ ॥ स्थालीपाकाहुतयस्त्वेकादशैव ११ ॥ यामलचरुपरिशिष्टोक्ताःषट्चर्वाहुतयो नापूर्वाः। किंतु। तत्र "मरुताय स्वाहा मारुताय स्वाहा मरुद्भ्यः स्वाहे"त्यनेन निरग्निकपरिशिष्टोक्ताहुतयो वेदबंधनस्य कालज्ञापनाय आज्यनिर्वापकालानुवादवत् विष्णवे प्रजापतयेइत्यादिहोमत्रयस्यावसरज्ञापनार्थमनूद्यंते। तेन मरुद्भ्यः स्वाहेत्यनंतरं विष्णवे प्रजापतये विश्वेभ्यो देवेभ्य इति तिस्र आहुतयो हूयंते"मिलित्वा चतुर्दश स्थालीपाकाहुतयः ॥१४॥ उभयत्र स्विष्टकृन्निर्देशस्तु होमसमाप्तिद्योतकः ॥ सूत्रे उभयनिर्देशात् मरुच्छब्दस्तांतोऽकारांतश्च ॥ "एतदेव ग्रहोत्पातेषु" ॥ १० ॥ एतदेव वैकृतप्रसवप्रायश्चित्तमेव। ग्रहोत्पातेषु। उत्पात उपसर्गः वैकृतं अद्भूतं चेत्यनर्थांतरं। उत्पातलक्षणं वसिष्ठसंहितायां। अन्यत्त्वं प्रकृतेर्यत्तदसावुत्पातसंज्ञकः। अधर्मतस्त्वसत्याच्च नास्ति-

क्यादतिलोभतः । अनाचारान्नृणां नित्यमुपसर्गः प्रजायते । इति । ते च दिव्याः १ आंतरिक्षाः २ भौमाश्चेति त्रिधा ॥ ३ ॥
त्रिविधोत्पातलक्षणं वसिष्ठसंहितायां । दिव्यांतरिक्षाः क्षितिजा विकारा घोररूपिणः । ग्रहर्क्षजाः केतवश्च उत्पाता दिव्यसंज्ञकाः । निर्घातपरिवेषोल्काः पुरंदरधनुर्ध्वजाः । एवमाद्या महोत्पाता आंतरिक्षाह्वयाः स्मृताः । उत्पद्यते क्षितौ यच्च स्थावरं वाथ जंगमं । तदेकदेशिकं भौम उत्पातः परिकीर्तितः । इति । एतेषां फलमपि तत्रैव । भौमाः स्युस्तुच्छफलदा आंतरिक्षास्तु मध्यमाः । संपूर्णफलदा दिव्या वर्षादर्धात्तदर्धत इति । ग्रहर्क्षजाः केतवश्च उत्पाता दिव्यसंज्ञका इति वासिष्ठात् सूत्रे ग्रहपदं नक्षत्रोपसंग्राहकं । ग्रहजा नक्षत्रजाश्च केतवो दिव्या उत्पाताः । बहुवचनं त्रिविधोत्पाताभिमतं । निमित्तसप्तमीयं । एषु निमित्तेषु एतदेव नैमित्तिकं । । "उलूकः कंकः कपोतो गृध्रः श्येनो वा गृहं प्रविशेत्स्तंभं वा प्ररोहेद्वल्मीकं मधुजालं वा भवेदुदकुंभप्रज्वलनआसनशयनयानभंगेषु गृहगोधिकाकृकलासशरीरसर्पणे छत्रध्वजविनाशे कूपोदकं गां जीर्येदि"ति ॥ ११ ॥ पूर्वसूत्रादेतदेवेत्यनुवर्तमाने वक्ष्यमाणेषु उलूककंकगृहप्रवेशादिषु निमित्तेषु नैमित्तिकमेतदेव । कपोतः । पारावतः कलरवः कपोत इत्यमरः । (महाराष्ट्रभाषाया-पारवा-खबूतर-इति) तज्जातीयः आरण्यकोरक्तपादःशुकवर्णः पक्षिविशेषः । महाराष्ट्रभाषायां (होलग) इतिप्रसिद्धः । उलूककंकगृध्रश्येनाः प्रसिद्धाः । वाकारश्चार्थे तेन वायसः । आरण्याः पक्षिणश्च । तथाच कौथुमशाखीयाद्भुतशांतिखंडे । वायसकपोताः प्रविशंत्यारण्यका विहंगमृगा गृहं प्रविशंति गोमृगं गृहमारोहेद्बलाकागृहमारोहे"दिति । बलाका ( महाराष्ट्रभाषायां-बगळा-इति ) बलाका बिसकंठिकेत्यमरः । कपो-

तस्य गृहे प्रवेशे गृहोपर्यारोहणे च फलं नारदसंहितायां । आरोहेत्तु गृहं यस्य कपोतो वा प्रवेशयेत् । स्थानहानिर्भवेत्तस्य यद्वाऽनर्थपरंपरा । दोषाय धनिनां गेहे दरिद्राणां शिवाय च । तच्छांतिस्तु प्रकर्तव्येति । वायसस्य गृहे देवालयादौ वा प्रवेशे फलं मानवसंहितायां । अथातः संप्रवक्ष्यामि वायसः प्रविशेद्गृहं । प्रवेशद्वारतो गच्छेन्मासमेकं विवर्जयेत् । द्वारांतरे यदा गच्छेत्षण्मासांस्तद्विवर्जयेत् । देवालये विशेच्चैव शीघ्रं मृत्युकरो भवेत् । देवालये नृपाणां तु ग्रामनाशो भविष्यति । गृहं प्रवेशयेत्काको गृहाशेषक्षयं करः । श्वानमार्जारतो गृध्रवायसः प्रविशेद्गृहं । गृहस्थमरणं विंद्यात्सर्वनाशो गृहे भवेत् । एतेषां दोषजातानां शांतिं वक्ष्ये समासतः । इति । अग्रे वक्ष्यमाणमद्भुतसागरोक्तं फलांतरं द्रष्टव्यं ॥ "स्तंभं वा प्ररोहेत्" । गृहप्रासादादौ प्रथमारोपितस्तंभं । अत्र "स्तंभः प्ररोहेदि"ति पाठांतरं । शुष्को वृक्षः प्ररोहेदिति तदर्थः । वृक्षवैकृतमिदं । वृक्षवैकृतप्रसंगात्कदलीदुष्टप्रसवफलं कथ्यते । विधानमालायां । येनैव लापितो वृक्षः स तस्य फलमश्नुते । प्रसूता पूर्वदिग्भागे रंभा सौख्यविवर्धिनी । दक्षिणे चार्थनाशाय शोकसंतापकारिका । पश्चिमे चोद्वसेद्ग्रामं कौबेर्यां शुभदा सदा । आग्नेयादिविदिक्ष्वत्र मध्यमं फलमश्नुते । तस्य दोषस्य शांत्यर्थं कुर्याच्छांतिकमुत्तमं । दुष्टप्रसूता रंभा चेत्पीतवस्त्रेण वेष्टयेत् । तामिति शेषः । कंचुकीं कंठसूत्रं च विविधाभरणं तथा । निवेद्य कदलीमूले ततस्तां परिपूजयेत् । तस्यै निवेद्यार्पयित्वा, तां मूले परिपूजयेदित्यर्थः । ततः सा कदली देया विप्रवर्याय धीमते । ततइति होमात्प्राक्पूजनं होमोत्तरं दानं इति प्रयोगक्रमः । तत्र तथैवोक्तेः । दानमंत्रः । असुराणां कुलोत्पन्ना रंभा बहुफलान्विता । अतस्तव प्रदानेन संततिर्मेऽभि-

वर्धतां ॥१॥ इति दानमंत्रः। ततस्तु विपुले कांस्ये तिलतैलप्रपूरिते। विलोक्य प्रतिबिंबं तु दद्याद्रजतसंयुतं। इति विधिविशेषः॥ ज्योतिर्निबंधे च उमामहेश्वरसंवादे। यदा याम्यमुखा देवि कदली तु प्रसूयते। तदा ग्रामपतेर्नाशं विदधाति न संशयः। एवं विघ्ने समुत्पन्ने विधानं तत्र कारयेत्। सूतिकेवोपचर्या सा कदली हितमिच्छता। दशाहादुत्तरं कार्यं होमं कुर्यात्ततः परं। विप्रेभ्यः सप्तधान्यानि देयानि विधिवत्ततः। दद्यात्तां कदलीं भार्यै विप्रवर्याय धीमते। इति। इति कदलीदुष्टप्रसवफलं विधिविशेषश्च॥ "वल्मीकं मधुजालं वा भवेत्"। वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकमित्यमरात् वल्मीकं वामलूरः (महाराष्ट्रभाषायां–वारुळ–) मधुजालं मधुक्षौद्रं माक्षिकादि 'सरघा मधुमक्षिका' इति चामरात् मधुमक्षिकाजालं। माक्षिकादीत्यादिना भ्रामरपौत्तिकादीनां जालं॥ अथ पिंगलस्वरस्य वल्मीकमधुजालयोः फलं मानवसंहितायां। पिंगलस्य स्वरेऽप्येवं मधुवल्मीकयोरपि। संपूर्णा मंदिरे हानिः शून्यं सद्मनि मंगलं। प्राकारेषु पुरद्वारे प्रासादादिषु वीथिषु। तत्फलं ग्रामपस्यैव सीम्नि सीमाधिपस्य चेति॥ आसनं पीठं। आसनं पीठमस्त्रियामित्यमरः। तच्चासाधारणं सिंहासनं भद्रासनं गजस्कंधदेशश्च। आसनं स्कंधदेशः स्यादित्यमरः। राजादीनां सिंहासनभंगे राज्याभिषेकादौ भद्रासनभंगे संग्रामादौ गजगंडस्थलभंगे चेत्यर्थः। शयनं खट्वाऽऽदि। यानं। सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणमित्यमरः। सर्वं हस्त्यश्वरथप्रवहणशकटशकटिकाशिबिकादोलांतं यानं तद्भंगे इति यावत्। राज्ञो युद्धे यानभंगः राजादिसर्वेषां यात्रायां यानभंगः स्त्रियाश्चोद्वहने यानभंगः। उद्वहनं पितृगृहात्पत्युर्गृहंप्रति विवाहोत्तरं यन्नवोढागमनं तत् स्त्रियाश्चोद्वहनं। इत्यादि विशेषो बोध्यः। पारस्करो-

ऽप्यत्र नैमित्तिकांतरमाह—"राज्ञोऽक्षभेदेनेद्धविमोक्षे यानविपर्यासेऽन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तमेवाग्निमुपसमाधाये" त्यादिना । तथाच तत्र तत्र तत्तदवसरे पारस्करोदितं कृत्वा एतच्च कर्तव्यं । गृहगोधिका पल्ली। पल्लीतु गृहगोधिकेत्यमरः । कृकलासः सरठः । सरठः कृकलासः स्यादित्यमरः । पल्लीसरठयोः शरीरसर्पणे फलं वसिष्ठसंहितायां । कुड्यगे मस्तकाद्यंगे पतिते फलमुच्यते । मस्तके राज्यलाभः स्याद्भाले कर्णेच भूषणं । नेत्रयोर्मित्रलाभः स्यात्सुगंधं नासिकोपरि । वक्रेतु भोजनं कंठे स्त्रीलाभः स्कंधयोर्जयः । अंसे तेजोविवृद्धिः स्यादर्थवृद्धिः करद्वये । वक्षस्थले तु सौभाग्यं हृदि प्रीतिविवर्धनं । पुत्रलाभस्तथा कुक्षौ स्यान्नाभौ कीर्तिवर्धनं । अर्थलाभस्तु पृष्ठे स्यात्पार्श्वयोः सुहृदागमः । कटिस्थाने वस्त्रलाभो गुह्यस्थाने समागमः । गुददेशे विनाशः स्यादूरुजान्वोश्च वाहनं । जंघयोः पादयोश्चैव सदागमनमादिशेत् । पादतश्चोर्ध्वगमनं कुर्यादामस्तकाद्यदि । गात्रे प्रदक्षिणे चापि राज्यलाभो भवेत्तदा । मस्तकात्पादपर्यंतं यदि गच्छेदधोऽपि वा । भवेयुश्च तदा तस्य कुटुंबे कलहामयाः । सरठीपतनादेवं सचैलं स्नानमाचरेत् । इति ॥ पल्लीसरठयोः शरीरे पतने आरोहणे च फलं नारदसंहितायां । पल्ल्याः प्रपतने चैवं सरठस्य प्ररोहणे । शुभाशुभं विजानीयात्तत्तत्स्थानविशेषतः । पल्ल्याः प्रपतने पूर्वैः फलमुक्तं शुभाशुभं । शीर्षे राज्यश्रियोऽवाप्तिर्भाले त्वैश्वर्यवर्धनं । सव्ये भुजे जयः प्रोक्तो ह्यपसव्ये महद्भयं । कुक्षौ दक्षिणभागेतु धनलाभस्तथैव च। वामकुक्षौ तु निधनं गदितं पूर्वसूरिभिः । सव्यहस्ते मित्रलाभो वामहस्तेतु निःस्वता । उदरे सव्यभागेतु सुपुत्रावाप्तिरुच्यते । वामभागे महारोगः कट्यां सव्ये महद्यशः । वामकट्यां तु निधनं मुनिभिस्तत्त्वदर्शिभिः । जान्वो-

रेवं विजानीयात्सव्यपादे शुभावहं । वामपादे तु गमनं स्त्रीणां व्यक्तं फलं वदेत् । फलं प्ररोहणे चैवं सरठस्य प्रचारतः । सर्वांगेष्वशुभं विंद्याच्छांतिं कुर्यात्स्वशक्तितः । शुभस्थाने शुभावाप्त्यै अशुभे दोषशांतये । इति । "छत्रध्वजविनाशे" । भूपति–देवताप्रासादादीनां अकस्मात् छत्रस्य ध्वजस्य च विनाशे पतनादिव्यापत्तौ एतदेव नैमित्तिकं । "कूपोदकं गां जीर्येत्" । वापीकूपतडागादिजलाशयानां जले अकस्माद्भूमिगते एतदेव नैमित्तिकं । गौर्भूमिः । गौरिला कुंभिनी क्षमेत्यमरः। उलूककंकादीनां गृहप्रवेशादयः कूपोदकं गां जीर्येदित्यंता उत्पाता भौमाः। अनुक्तानां भौमानामुत्पातानां दिक्दर्शनमिदं । तत्राप्ययं विवेकः । उलूकः कंकः कपोतो गृध्रः श्येनो वा गृहं प्रविशेदित्यादीनि वल्मीकं मधुजालं वा भवेदित्यंतानि मृगपक्षिवैकृतानि । गृहगोधिकाकृकलासपर्णं वक्ष्यमाणं काकसर्पसंगमप्रेक्षणंच मृगपक्षिवैकृतमेव । स्तंभं वा प्ररोहेदित्यत्र स्तंभः प्ररोहेदिति पाठांतरं । शुष्कोवृक्षः प्ररोहेदिति तदर्थः । इदं कदलीदुष्टप्रसवश्च वृक्षवैकृतं । उदकुंभप्रज्वलनमग्निवैकृतं । आसनशयनयानभंगाः छत्रध्वजविनाशश्चोपस्करवैकृतानि । कूपोदकं गां जीर्येदिति जलाशयवैकृतं । सर्वत्रेदं दिक्दर्शनं । अनुक्तवैकृतानि शांतिकमलाकरमयूखादौ द्रष्टव्यानि ॥ "सार्पे नैर्ऋते गंडयोगे" ॥ १२ ॥ सार्पमाश्लेषा । नैर्ऋतं मूलं । उभयत्र गंडयोगे सतिच जननेतु तत्तन्नक्षत्रजननशांतिं तत्तद्गंडयोगजननशांतिं च कृत्वा तत्र गंडयोगजनननिमित्तकमेतन्नै-मित्तिकं चेति शांतित्रयमिति सूत्रार्थः । मदनरत्ने पितामहसंहितायामपि। शूलो व्याघातवज्रौ च व्यतीपातश्च वैधृतिः । परिघो वारदोषाश्च विष्टिश्च विषनाडिकाः । अन्ययोगादिभिर्युक्ते मूले दोषोऽधिको भवेदिति। एतत्सूत्रैकवाक्यतया अस्मि-

न्वचसि मूलं सार्पस्योपसंग्राहकं । वारदोषाः कंटकयमघंटकालदंडमृत्युदग्धयोगाः । अन्ययोगाः दिनक्षयगंडातिगंडैक-
नक्षत्रजननत्रिकप्रसवादयः । एतज्जननं प्रसववैकृतं ॥ "देवप्रसर्पणेषु" ॥ १३ ॥ देवताप्रतिमादीनां अकस्मात्स्वस्थाना-
त्स्थानांतरे चलनेषु बहुवचनेन आकस्मिकानि देवतादीनां नर्तनप्रकंपनप्रज्वलनप्रस्वेदनरोदनप्रहसनप्रधावनवमनविकृतचे-
ष्टाअवाङ्मुखताअग्निधूमतैलरक्तवसाऽस्थिमज्जादिवमनेषु, एतदेव नैमित्तिकं । इदं देवताप्रतिमादीनां वैकृतं ॥ "अन्येषू-
त्पातेषु भूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वेतदेव प्रायश्चित्तं" ॥ १४ ॥ प्रथमं एतदेव ग्रहोत्पातेषु इतिदशमसूत्रेण
दिव्योत्पातेषु तत उल्कः कंकः कपोतेत्यादि भूकंपकाकसर्पसंगमप्रेक्षणांतैरेकादशादिचतुर्दशांतैः सूत्रैर्भौमोत्पातेषु आंतरि-
क्षोत्पातेषुच एतन्नैमित्तिकं विहितं । अन्येषूत्पातेष्वित्यत्रान्यशब्देन विशेष्यगतबहुवचनेन चानुक्तानां त्रिविधानां सर्वेषामु-
त्पातानां संग्रहः । तत्राप्येतदेव प्रायश्चित्तं । अनुक्तानां लक्षणानि फलानि विधानांतराणिच वाराहीवासिष्ठीगार्गीनारदीसंहितासु
मत्स्यपुराणदेवीपुराणादौ बौधायनगृह्यादौ मुहूर्ततत्त्वादिज्योतिर्ग्रंथेषु शांतिकमलाकरे शांतिमयूखे शांतिसारे चावलोक्यानि ।
विस्तरान्नेह प्रपंचितं । भूकंपलक्षणं शांतिरत्ने भट्टानां श्लोकः । केचिद्दिक्करिकुंभचालनभवं वाताभिघातोद्भवं केचिन्नीरधि-
वीचिदोलनभवं तन्मीनजातं परे । भूकंपं ब्रुवते वयं हरिगुणा श्रीणासमाकर्णयोः प्रोद्यद्दृचर्षफणींद्रकंपितशिरःश्रेणीभवं ब्रूमहे
॥ १ ॥ उल्कापातो मुहूर्ततत्त्वे । ताश्च पंच । अशनिः १ विद्युत् २ धिष्ण्या ३ तारा ४ उल्का ५ चेति । भूमिगतप्रा-
णिनि मनुष्यगजाश्वमृगपश्वादौ निपतंती महास्वनकृदशनिः १ दीर्घा वक्रा ज्वलंती तद्रूतद्गशब्दकृत् विद्युत् २ समीपगता

स्वल्पपुच्छा द्विहस्ता ज्वलदंगारनिभा धिष्ण्या ३ तंत्वाकारा ताम्रा शुक्ला च हस्तमात्रा तिर्यग्गता ऊर्ध्वगता अधोगताच तारा ४ विपुलमस्तका दीर्घपुच्छा नानाकारा उल्का ५ इत्युल्कालक्षणं । काकसर्पसंगमप्रेक्षणं हेमाद्रौ गर्गः । काको मैथुनयुक्तश्चेच्छ्वेतः स यदि दृश्यते । इति । नारदसंहितायां । दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनं । स नरो मृत्युमाप्नोति ह्यथवा स्थाननाशनं । तद्दोषशमनार्थं शांतिकर्म समाचरेदिति । अद्भुतसागरे गर्गः । काकस्य मैथुनं पश्येत्काकः शिरसि चेद्विशेत् । शिरस्युरसि वा कुर्यात्पक्षाघातं नखैस्तथा । विदारणं च कुरुते शयानं च स्पृशेद्यदि । तदा वदेत्तु मरणं महारिष्टमथापि वा । महारात्रे यदा काको वाशते हेतुना विना । वाशृशब्दे । तद्गृहारिष्टमाचष्टे ग्रामारिष्टमथापि वा । शांतिं तत्र प्रकुर्वीत विधानेन यथोदितमिति । गर्गसंहितायां । सूर्यास्तमनवेलायां वायसः संस्पृशेद्यदि । निःशब्दो वा सशब्दो वा पुंसो मृत्युप्रदायकः । अंगनां च स्पृशन्काको वैधव्यं तत्र निर्दिशेत् । नदीतीरे गवां गोष्ठे क्षीरवृक्षे सुरालये । नरो वायससंस्पृष्टो वधबंधनमाप्नुयात् । प्रतिचंद्रं प्रतिसूर्यं वायसः स्पृशते यदि । अर्थहानिं ततो मृत्युं शस्त्रेण च विनिर्दिशेत् । मासैः पंचभिरेवास्य निशामे फलमादिशेत् । तद्दिनादि फलं सद्भिः प्रोक्तमत्र शुभाशुभं । शांतिं तत्र प्रकुर्वीत शास्त्रदृष्टेन कर्मणा । इति । तथाऽद्भुतसागरे नारदः । मध्यरात्रे निशीथे वा यदा गौः क्रंदते सदा । ग्रामे वा स्वगृहे वाऽपि शांतिकं पूर्ववद्विशेदिति । निशीथे रात्रिमात्रे । निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रकइति मेदिनी । प्रेक्षणादीत्यादिना कौथुम्युक्तप्रभृतीनि । तथाच कौथुमशाखीयं शांतिखंडं । "अथ यदाऽस्य

कनकराजतवस्त्रवज्रवैडूर्यमौक्तिकमणिवियोगो भवति आरंभा वा विपद्यंते भार्या वा विरज्यंते मित्राणि विरज्यंते ऽरिष्टानिवाचो वयांसि गृहमध्येऽ आसते मधूनि वा विलीयंते वल्मीकं वोपजायते छत्राकं चोपजायते शश-कस्तिष्ठति वायसकपोता वा गृहं प्रविशंत्यारण्यका विहंगमृगा गृहं प्रविशंति गोमृगं गृहमारोहेद्बलाका गृहमारोहेत्काकमैथु-नानि दृश्यंते शुष्कवृक्षाः प्ररोहंते गृहमध्ये दूर्वाः प्ररोहंते तैलं स्त्यायते रात्राविंद्रधनुर्दृष्ट्वा दिवा श्वेतंच वायसं गृहद्वारेण सर्पो निर्गच्छति मंडूकोऽग्निं प्रविशति सरठो मूर्ध्नि पतति चुल्ली पतति प्रज्वलन्दीपः पततीत्येवमादीनि वैश्रवणदैवत्यान्य-द्भुतानि प्रायश्चित्तानि भवंतीति" ॥ आसते आसउपवेशने धातुः । वलाका प्राग्व्याख्याता । मैथुनानीति वहुवचनं सर्पसं-गमाभिप्रायेण । स्त्यायते स्त्यैसंघातेधातुः । संघातो घनीभावः । चुल्ली अश्मंतमुद्धानमधिश्रयणी चुल्लिरंतिकेत्यमरः । (महा-राष्ट्रभाषया—चूल—) । शांतिमयूखे । वृत्तं वा मुसलं वाऽपि स्फुटते वाऽप्युलूखलं । मुसलोलूखले प्रसिद्धे । वृत्तं दलन-यंत्रं । भूतानां चैव बिभ्येत गृहं देवकुलं तथा । दृषद्वा भद्रपीठं वा आसनं शयनं तथा । अकस्मात्स्फुटते यत्र कंपते वा वसुंधरा । इति ॥ कौथुमिशाखीये अद्भुतशांतिखंडे । पृथिवी तरति स्फुटति कंपति कूजति धूमायत्यकस्मात्सलिलमुद्गिर-त्यकाले च पुष्पफलमभिनिवर्तत इति ॥ तथा गर्गः वृष्टिवैकृतमुवाच । अतिवृष्टिरनावृष्टिर्दुर्भिक्षादिभयं ततः । अनृतौ तु दिवाऽनंता वृष्टिर्व्याधिभयाय तु । अनभ्रवैकृताश्चैव विज्ञेया राजहंतवे । वैकृता गर्जितादयः । शीतोष्णानां विपर्यासे ऋतूनां रिपुजं भयं । सततं वर्षते यत्र तत्र शस्त्रभयं भवेत् । इति ॥ ग्रहशांतिं चोक्तविधिना कृत्वा ॥ १५ ॥ चकारः समुच्चये ।

आदौ पृथक् सहतंत्रेण वा ग्रहशांतिं ग्रहमखं कृत्वा उक्तविधिना एतत्प्रायश्चित्तं कुर्यादिति सूत्रार्थः । ग्रहशांतिश्च याज्ञवल्क्योक्ता । सा त्वग्रे वक्ष्यते । यामलचरुपरिशिष्टं । "प्राशनांते शेषं चरुं गृहीत्वाऽश्वत्थं प्रदक्षिणीकृत्योपविशेत्तदेव तत्र समाप्य ततो ब्राह्मणभोजन"मिति । संस्रवप्राशनांते होमशेषं मारुतं चरुं गृहीत्वा अश्वत्थं प्रदक्षिणीकृत्य सन्निधानादश्वत्थसमीपे कंचित्कालमुपविश्य तत्राश्वत्थसमीप एव तन्मारुतचरुशेषं समाप्य प्रतिपाद्य ततो ब्राह्मणभोजनमिति यामलचरुपरिशिष्टार्थः । आचार्याय वरं दत्वा ब्राह्मणान्भोजयित्वा स्वस्ति वाच्याशिषः प्रतिगृह्य शांतिर्भवतीति ॥ १६ ॥ मारुतचरुशेषप्रतिपत्त्यनंतरं आचार्याय वरदानं । ततो ब्राह्मणभोजनं । ततः स्वस्ति वाच्याशीःप्रतिग्रहणं । एवं कृते विधाने शांतिर्भवति। द्विरुक्तिः समाप्त्यर्था॥ आहिताग्निभिः कुलनाशाद्यरिष्टनिवारणार्थतया प्रत्यवायपरिहाराय "भार्यागोष्वि"त्यादिना विहितं वैतानिकं त्रयोदशकपालं मारुतं यागं वैतानिकेषु कृत्वा एतन्नैमित्तिकं लौकिकाग्नौ कार्यं । एवमनाहिताग्निभिः "य आहिताग्नेः पुरोडाशास्तअनाहिताग्नेश्चरवः" ॥ इतिवचनात् आवसथ्ये यामलचरुपरिशिष्टोक्तं मारुतं चरुयागं कृत्वा एतन्नैमित्तिकं लौकिकेऽग्नौ कार्यं । शांतिकस्य लौकिकाग्निसाध्यत्वात् । यत्तु धर्माब्धौ यमलजननशांतौ सा च साग्निकैः कात्यायनैः स्वगृह्याग्नौ कार्या इत्युक्तं तत्तुच्छं । "एष एव विधिर्यत्र क्वचिद्धोमः" इति पारस्करगृह्ये । एष एव विधिरेव न मंत्राः समाम्नायाभावात् यत्र क्वचिद्धोमः शांतिकपौष्टिकादिष्वपीति क्वचिच्छब्दश्च गृह्याग्निव्यतिरेकेणापि यथा "दावाग्निमुपसमाधाय घृताक्तानि कुशेंडूवानि जुहुयादि"ति कर्कभाष्यात् ॥ इति शं । वह्नीषुवसुभूशाके १८५३

ज्येष्ठे कृष्णे शरे ५ भृगौ । वारे इत्युपनाम्ना वै अण्णाशास्त्रीति शर्मणा । नानानिबंधानुसृतं व्याकृतं यामलं त्विदं । बालानां सुखबोधाय कृपयाऽऽलोच्यतां बुधैः ॥ २ ॥

इति कात्यायनयमलजननप्रायश्चित्तपरिशिष्टभाष्यं यामलचरुपरिशिष्टभाष्यं च परिसमाप्तं ॥ ॥श्रीरेणुकायै नमोनमः॥

॥ श्रीर्भूयात् ॥ ॥ छ ॥

यमलजननशांतिप्रयोगः ॥ श्रीः ॥ अथ कात्यायनीययामलपरिशिष्टानुसारी यमलजननवैकृतप्रसवशांतिप्रयोगः ॥ आदौ गोमुखप्रसवः। आचमनादिदेशकालसंकीर्तनांतं। प्रधानसंकल्पः। अस्यां मम भार्यायां यज्जनितपुंरूपं स्त्रीरूपं पुंस्त्रीरूपं वा यमलं तज्जनुर्जन्यपित्रारिष्टादिअन्यतमारिष्टं तदुपशमनपूर्वकं सदभीष्टमंगलावाप्तये मरुतदेवताप्रसादसिद्धिद्वारा आदित्यादिग्रहानुकूल्यतासिध्यर्थंच कातीययामलपरिशिष्टोक्तां सग्रहमखां वैकृतयमलप्रसवशांतिं करिष्ये। इति प्रधानसंकल्पः। गणपतिपूजनादिअग्निस्थापनांतं प्रकृतिवत् ॥ पुण्याहवाचने अस्य सग्रहमखस्य वैकृतयमलप्रसवशांत्याख्यस्य कर्मणः पुण्याहं कल्याणं ३ ऋद्धिं ३ अस्मै सग्रहमखाय वैकृतयमलप्रसवशांत्याख्याय कर्मणे स्वस्तिं ३ श्रीरस्त्वितिच ३ । अनेन पुण्याहवाचनेन मरुतदेवता प्रियतां इति विशेषः। अग्नेः प्राच्यां पीठे अष्टदले ॐमहीद्यौरित्यादिविधिना कलशं प्रतिष्ठाप्य। पूर्णपात्रे सौवर्णप्रतिमायां अभ्युत्तारणप्राणप्रतिष्ठापूर्वकं ॐ मरुतोयस्यहिक्षयेपाथादिवोविमहसः ॥ ससुगोपातमोजनः ॥१॥ ॐ मरुतायनमः मरुतमावाहयामि इति मंत्रेण आवाहनादिषोडशोपचारैः मरुतदेवतां संपूजयेत्। ततो ग्रहप्रतिष्ठापनं ॥

अथ स्नापनविधिः । कर्ममंडपात्प्रागुदग्वा स्नानमंडपे स्नानार्थभद्रपीठस्य परितः पूर्वादिप्रादक्षिण्येन ॐ महीद्यौरित्यादि-विधिना अष्टौ कलशान् अश्वत्थप्लक्षवटौदुंबरेति चतुर्वृक्षसंबंधित्वक्पल्लवीयकषायेण प्लक्षवटौदुंबराश्वत्थशमीदेवदारुवृक्षाणां क्षीराणि गौरसर्षपांश्च हिरण्यदूर्वांकुराम्रपल्लवैः सहमिश्रितानि कृत्वा तैः क्षीरादिभिः सर्वौषधीभिश्च प्रपूर्य पूर्णपात्राणि निधाय तेषु वरुणान् संपूजयेत् । तत आचार्यः स्नानपीठे दंपती उपवेशयेत् । तौ चोपविशेतां । परिहितश्वेतवसनाः पतिपुत्रवत्यस्त्रि-यस्तौ नीराजयित्वा सुगंधतैलेन सर्वौषध्यादिचूर्णेन चोद्वर्तयेयुः । ततस्ताः प्राङ्मुख्य उदङ्मुख्यो वा राज्ञो गानं वीरतरपुरु-षगानं वेति मंगलगानं गायंत्यः सत्यः मंगलवाद्यघोषेणच लौकिकोष्णोदकेन प्रथमं यमलिनीं ततस्तत्पतिं इति क्रमेणोपक्रम्य सहैव दंपती स्नापयेयुः । अथवा । परिहितश्वेतवाससः अकृतसमावर्तनाः ब्रह्मचारिणो वा स्नापयेयुरिति स्नापनकर्तॄणां विकल्पः ॥ ततः परिहितश्वेतवासा आचार्यः अष्टकलशेभ्यः प्रागादिप्रादक्षिण्येन एकस्मिन् महति पात्रे सकल-मुदकमुद्धृत्य दंपत्योः शिरसि सौवर्णं शतधारं पवित्रं चालनीं धृत्वा तस्मिन् तदुदकं किंचित्किंचिदासिच्यासिच्य तेनोद-केन तावभिषिंचेत् ॥ तत्र मंत्राः । ॐ आपोहिष्ठा० १ योवः शिवतमो० २ तस्माऽअरं० ३ कयानश्चित्र० ४ कस्त्वा-सत्यो० ५ त्रातारमिंद्रं० ६ इत्येका । अथवा ऐंद्राः पंच ऋङ्मंत्राः । तेच आयात्विंन्द्रोऽवसउपनऽइहस्तुतःसधमादस्तु-शूरः । वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ॥१॥ आनऽइन्द्रोदूरादानऽआसादभिष्टिकृदवसेयासदुग्रः ॥ ओजि-ष्ठेभिर्नृपतिर्वज्रबाहुःसंगेसमत्सुतुर्वणिःपृतन्यून् ॥ २॥ आनऽइन्द्रोहरिभिर्यात्वच्छार्वाचीनोऽवसेराधसेच ॥ तिष्ठातिवज्रीम-

घवांविरप्शीमंस्य्यज्ञमनुनोवाजसातौ ॥ ३ ॥ त्रातारमिंद्रं० ॥ ४ ॥ इन्द्रः सुत्रामास्ववाँ २ ॥ ऽअवोभिःसुमृडीकोभवतुवि-
श्ववेदाः ॥ वाधतान्द्वेषोऽअभयङ्कृणोतुसुवीर्यस्यपतयःस्याम ॥ ५ ॥ इति वा पंच ॥ अथवा । ऐंद्राणि पंच यजूंषि । ॐ
इन्द्रस्यस्यूरसि ॥ १ ॥ इन्द्रस्यध्रुवोऽसि ॥ २ ॥ ऐन्द्रमसि ॥ ३ ॥ वागस्यैन्द्रमसिसदोऽसि ॥ ४ ॥ इन्द्रायत्वावसुमते
॥ ५ ॥ इति वा पंच ॥ इति तिस्रो विभाषाः । वरुणस्योत्तंभनमसि० मासीद ॥ १ ॥ इति पंच वारुणी कंडिका ॥ १ ॥
अथवा पंच वारुणीकंडिकापठितानि पंचवारुणानि यजूंषि । वरुणस्योत्तम्भनमसि ॥ १ ॥ वरुणस्यस्कंम्भसर्जनीस्थः
॥ २ ॥ वरुणस्यऽऋतसदन्यसि ॥ ३ ॥ वरुणस्यऽऋतसदनमसि ॥ ४ ॥ वरुणस्यऽऋतसदनमासीद ॥ ५ ॥ इति पंच
यजूंषि । अथवा । पंच वारुणा ऋङ्मंत्राः । उदुत्तमंवरुणपाशं० ॥ १ ॥ इमम्मेवरुणश्रुधी० ॥ २ ॥ तत्त्वायामिब्रह्मणा०
॥ ३ ॥ शन्नोमित्रःशंवरुणः शं० ॥ ४ ॥ शन्नोदेवीरभिष्टय० ॥ ५ ॥ इति वा पंच । इति विभाषात्रिकं । इदमापः
प्रवहता० ॥ १ ॥ अपाघमपकिल्विषं० ॥ १ ॥ पंचैन्द्रेण पंचवारुणेनैत्यैकवचनांतपाठे स्नपनमंत्रा नव ॥९॥ वा चतुर्दश
१४ वा ॥ बहुवचनांतपाठे तु सप्तदश ॥ १७ ॥ स्नानोत्तरं । दंपत्योर्महार्हवासःपरिधानं । चंदनकुंकुमादिसौभाग्यादिति-
लकधारणं । कंठभूषणादिसौवर्णालंकारधारणं च कृत्वा आसने उपवेशनं । ततो यमलिनीपत्युः आशुःशिशानइति सप्त-
दशर्चस्याप्रतिरथसूक्तस्य जपः । तत इदमापःप्रवहतेति कंडिकाजपः । ततो मातृभिर्मातृसमानाभिः सापत्नमातृमातृष्व-
सृपितृष्वस्रादिभिर्दंपतीभ्यां नीराजनं कार्यं । तौच ताभ्यः कंचुक्यादिवासांसि कंठभूषणादीन् सौवर्णालंकारान् अन्य-

चैवमेव यथाशक्ति पारितोषिकं दद्यातां ॥ आचार्याय वरदानमनुद्दुहानंच देयं । वरस्तदभिलषितं स्वाभिलषितं वा द्रव्यं॥ तत आचार्यस्तावग्नेः पश्चाद्धोमार्थं दर्भासने प्राङ्मुखावुपवेशयति । तौ चोपविशतः ॥ तत अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि स्थालीपाकं श्रपयित्वा आज्यभागांतं ॥ द्रव्यत्यागः । ग्रहहोमः ॥ ततः प्रधानहोमः । स यथा । प्रथमं पूर्वोक्तैः स्नपनमंत्रैः प्रतिमंत्रं सकृत्सकृदाज्येन । एकवचनांतपाठे नव चतुर्दश वा आज्याहुतयः ॥ ९।१४ ॥ बहुवचनांतपाठे सप्तदशाज्याहुतयः ॥ १७॥ ॐ आपोहिष्ठा० चक्षसेस्वाहा । इदमद्भ्योन० १ ॐ योवः शिवतमो० मातरः स्वाहा । इदमद्भ्योन० २ ॐ तस्माऽअरं०चनःस्वाहा । इदमद्भ्योन० ३ ॐ कयानश्चित्र० वृतास्वाहा । इदमिंद्राय० ४ ॐ कस्त्वासत्यो० वसु स्वाहा । इदमिंद्राय० ५ ॐ त्रातारमिंद्रं० धात्विन्द्रःस्वाहा । इदमिंद्राय० ६ इयं वा। अथवा पंचैंद्राः। ॐ आयात्विन्द्रो० पुष्यांस्वाहा ॥ १ ॥ इदमिंद्रायेति पंचसु त्यागः । ॐ आनइन्द्रोदूरा० पृतन्यून् स्वाहा ॥ २॥ ॐ आनऽइन्द्रोहरिभि० वाजसातौ स्वाहा ॥ ३ ॥ ॐ त्रातारमिन्द्रं० धात्विन्द्रः स्वाहा ॥ ४ ॥ ॐ इन्द्रः सुत्रामा० स्याम स्वाहा ॥ ५ ॥ अथवा पंचैंद्राणि यजूंषि । ॐ इन्द्रस्यस्यूरसि स्वाहा ॥ १ ॥ इदमिन्द्रायेति पंचसु त्यागः । ॐ इन्द्रस्यध्रुवोऽसि स्वाहा ॥ २ ॥ ॐ ऐन्द्रमसि स्वाहा ॥ ३ ॥ ॐ वागस्यैन्द्रमसिसदोऽसि स्वाहा ॥४॥ ॐ इन्द्रायत्वावसुमते स्वाहा ॥५ ॥ ॐ वरुणस्योत्तंभन० मासीद स्वहा । इदं वरुणाय नमम ॥ १ ॥ इयं वा । अथवा पंच वारुणानि यजूंषि । ॐ वरुणस्योत्तम्भनमसि स्वाहा १। इदं वरुणायेति पंचसुत्यागः । ॐ वरुणस्यस्कंम्भसर्जनीस्थः स्वाहा ॥ २॥ ॐ वरुणस्यऽऋतसदन्यसि स्वाहा ॥ ३ ॥ ॐ

व्वरुणस्यऽऋतसदनमसि स्वाहा ॥ ४ ॥ ॐ व्वरुणस्यऽऋतसदनमासीद स्वाहा ॥ ५ ॥ अथवा पंच वारुणाः । ॐ उदुत्तमंम्व-
रुणपाशं० स्याम स्वाहा ॥१॥ इदंवरुणायेति तिसृषु त्यागः । ॐ इमम्मेव्वरुण० रांचके स्वाहा ॥२॥ ॐ तत्त्वायामि ब्रह्मणा०
प्रमोषीः स्वाहा ॥ ३ ॥ ॐ शन्नोमित्रश्शम्वरुणश्शं० रुरुक्रमः स्वाहा ॥ ४ ॥ इदं मित्राय वरुणायार्यम्णे इंद्राय बृहस्पतये
उरुक्रमाय विष्णवे च न मम ॥ ४ ॥ ॐ शन्नोदेवी० स्रवन्तुनः स्वाहा ॥ ५ ॥ इदमद्भ्यो न० ॥ ५ ॥ ॐ इदमापः प्रवहता०
मुञ्चतु स्वाहा । इदमद्भ्यः पवमानाय च न मम ॥ १ ॥ ॐ अपाघमपकिल्बिषं० सुव स्वाहा । इदमपामार्गाय पितृभ्यश्च
न मम ॥ १ ॥ उदकोपस्पर्शः । ततः स्थालीपाकमभिघार्य । स्थालीपाकस्य जुहोति । स्थालीपाकस्येत्यवयवे षष्ठी । प्रति-
दैवतं प्रतिमंत्रं सकृत्सकृत् स्थालीपाकस्यावयवं जुहोतीत्यर्थः ॥ ॐ अग्नये स्वाहा । इदमग्नये न० ॥ १ ॥ ॐ सोमाय स्वाहा ।
इदंसोमाय० ॥ २ ॥ ॐ पवमानाय स्वाहा । इदं पवमानाय० ॥ ३ ॥ ॐ पावकाय स्वाहा । इदं पावकाय० ॥ ४ ॥ ॐ
मरुताय स्वाहा । इदं मरुताय० ॥ ५ ॥ ॐ मारुताय स्वाहा । इदं मारुताय० ॥ ६ ॥ ॐ मरुद्भ्यः स्वाहा । इदं मरुद्भ्यो०
॥ ७ ॥ ॐ व्विष्णवे स्वाहा । इदम्विष्णवे० ॥ १८ ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये० ॥ ९ ॥ ॐ विश्वेभ्यो देवेभ्यः
स्वाहा । इदं विश्वेभ्यो देवेभ्यो न मम ॥ १० ॥ ॐ यमाय स्वाहा । इदं यमाय० ॥ ११ ॥ ॐ अन्तकाय स्वाहा । इदमं-
तकाय० ॥ १२ ॥ ॐ मृत्यवे स्वाहा । इदं मृत्यवे० ॥ १३ ॥ ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे० ॥ १४ ॥ इति चतुर्दश
स्थालीपाकाहुतयः ॥ १४ ॥ इति प्रधानहोमः । तत उत्तरांगानि ॥ पूजा स्विष्टं नवाहुत्यो बलिः पूर्णाहुतिस्तथा । ततः

संस्रवप्राशनांते । होमावशिष्टं मारुतं चरुं गृहीत्वा । उभाभ्यामश्वत्थं संपूज्य प्रदक्षिणीकृत्य । तं चरुशेषमश्वत्थाय निवेद्य । कंचित्कालमश्वत्थसमीपे उपविश्य । पाणिपादं प्रक्षाल्य । आचम्य । कर्मभूमिमागच्छतः । ततः श्रेयः संपाद्य दानं ॥ आचार्यपूजनं । आचार्याय वरदानं गोदानंच । ऋत्विग्भ्यश्च दक्षिणादानं । आज्यावलोकनं । सदक्षिणं तत्पात्रदानंच । सप्तधान्यदानानि । कर्मणः पूर्णतावाचनं । अंते शांत्यध्यायपठनं । स्वस्तिवाच्याशीर्ग्रहणं । विसर्जनं । भूयसीप्रदानं । ब्राह्मणभोजनं । यस्यस्मृत्येत्यादि विष्णुस्मरणं तन्नमस्कारश्च ॥ एवं कृते शांतिर्भवति शांतिर्भवतीति ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिककांडे कात्यायनयामलपरिशिष्टानुसारी यमलजननवैकृतप्रसवशांतिप्रयोगः ॥ ॥ ७ ॥

अथ भार्यागवादीनां प्रसववैकृतानि ।

१ अकाले प्रसवः,

२ कालातिक्रमे प्रसवः,

३ यमलप्रसवः,

४ त्रिचतुरादिप्रसवः,

५ अमानुषप्रसवः,

६ अशिरस्कप्रसवः,

अथ देवताप्रतिमागृहप्रासादादीनां वैकृतानि ॥

१ आकस्मिकमिति सर्वत्र बोध्यं

१८ नर्तनं, प्रकंपनं, प्रज्वलनं, प्रस्वेदनं,
स्वस्थानात् स्थानांतरप्रसर्पणं, रोदनं,
प्रहसनं, प्रधावनं, वमनं, विकृतचेष्टा,
अवाङ्मुखता, अग्नि, धूम, तैल, रक्त, वसा,
अस्थि, मज्जादि, वमनं,

७ प्रजननलिंगशून्यप्रसवः,

८ न्यूनांगप्रसवः,

९ अधिकांगप्रसवः,

१० अधोमुखप्रसवः,

११ केशरहितशिरस्कप्रसवः,

१२ वक्रमुखप्रसवः,

१३ घटाकारमुखप्रसवः,

१४ अचेतनप्रसवः,

१५ जात्यंतरलक्षणांकितप्रसवः,

१६ सदंतप्रसवः,

१७ अश्वमुखवद्विकृतमुखप्रसवः,

१८ बहुशीर्षप्रसवः,

१९ बहुकर्णप्रसवः,

। अथ[3] जलाशयवैकृतानि ।

१ वापीकूपतडागादिजलाशयानां सर्वमुदकं भूमौ जीर्यते,

। अथाग्निवैकृतानि[4] ।

१ उदकुंभप्रज्वलनं

२ प्रज्वलद्दीपपतनं

। अथ[5] वृक्षवैकृतानि

२० दीर्घकर्णप्रसवः,

२१ महाकर्णप्रसवः,

२२ अजकर्णप्रसवः,

२३ विपरीतकर्णप्रसवः,

२४ अकर्णप्रसवः,

२५ श्वापदव्याघ्रमार्जारवत्तनुप्रसवः,

२६ व्यालव्याघ्रमुखाकारप्रसवः,

२७ बिलालवदुन्नतमुखप्रसवः,

२८ अबाहुप्रसवः,

२९ त्रिचतुरादिभुजप्रसवः,

३० पादजातप्रसवः,

३१ सर्पगंडयोगेषु प्रसवः,

३२ मूलगंडयोगे प्रसवः,

१ शुष्कवृक्षस्यांकुरप्रसवः

१ कदलीदुष्टप्रसवः

। अथोपस्करवैकृतानि ।

६ राजादीनां, सिंहासन, भद्रासन, गजगंडस्थल, छत्र, चामर, ध्वजादीनां भंगः,

१ खट्वादिशयनोपस्करभंगः,

७ गजाश्व, रथ, प्रवहण, शकट, शकटिका, शिबिका, प्रेंखदोलादियानभंगः,

५ चुल्ली घरट्टक मुसलोलूखलदृषदां स्फोटनं,

। वृष्टिवैकृतं ।

३३ गवादिपशूनां त्रिचतुरादिशृंगप्रसवः,

अथ मृगपक्षिवैकृतानि ।

१ उलूक, कंक, कपोत, गृध्र, श्येन, बलाका, आरण्यकपक्षिणां गृहे, देवालयप्रासादादौ प्रवेशः

२ गृहदेवालयप्रासादादौ प्रथमा-रोपितस्तंभे उलूकादीनामारोहः

३ वायसस्य, कपोतस्य च गृहे देवा-लयादौ प्रवेशः,

—गृहे देवालयादौ,—

४ वल्मीकोत्पत्तिः,

५ मधुजालोत्पत्तिः

६ छत्राकोत्पत्तिः,

१ अतिवृष्टिः, अनावृष्टिः, इत्यादीनि

। अथ दिव्या उत्पाताः ।

२ ग्रहजा नक्षत्रजाश्च धूमकेत्वादयः केतवः,

। अथ आंतरिक्षा उत्पाताः ।

१ निर्घातः—परस्परप्रतिघातान्निर्गतो महान् गर्जनारूपो ध्वनिः,

२ परिवेषः—सूर्यस्य आसमंतात् ज्योतिर्मयं मंडलं,

३ उल्काः—अशनिः, विद्युत्, धिष्ण्या,

७ पिंगलस्वरः,
८ गृहे दूर्वोत्पत्तिः,
९ मंडूकस्याग्नौ प्रवेशः,
१० गृहद्वारेण सर्पस्य बहिर्निष्क्रमणं,
११ दिवा श्वेतवायसदर्शनं,
१२ दुष्टपक्षिणां गृहादौ वासः,
१३ पल्लीसरठयोः शरीरे सर्पणं पत्तनं च,
१४ काकमैथुनदर्शनं,
१५ सर्पमैथुनदर्शनं,
१६ रात्रिमात्रे मध्यरात्रे वा सदा गोःक्रंदनं,
१७ वायसकपोतारण्यकपक्षिणां रात्रिमात्रे मध्यरात्रे वा क्रंदने,

तारा, उल्का, ५
४ इंद्रधनुः
५ इंद्रध्वजादयः,

। [३]अथ भौमा उत्पाताः ।
१ भूकंपः
२ स्थावरा जंगमाश्च उत्पाताः,

एतेषूक्तेषु, अनुक्तेषुच [१]प्रसववैकृतेषु [२]देवताप्रतिमागृहप्रासादादिवैकृतेषु [३]जलाशयवैकृतेषु [४]अग्निवैकृतेषु [५]वृक्षवैकृतेषु [६]उपस्करवैकृतेषु [७]वृष्टिवैकृतेषु [८]मृगपक्षिवैकृतेषु [१]दिव्येषूत्पातेषु [२]आंतरिक्षेषूत्पातेषु [३]भौमेषूत्पातेषु च इयमेव यमलजननपरिशिष्टोक्ता

कात्यायनीया सग्रहमखा शांतिर्वाजसनेयिनां। तत्तद्विधानांतराणि इतरत्र चरितार्थान्येव अनुक्तानि वैकृतानि उत्पाताश्च आकरे द्रष्टव्याः। इयं यामली शांतिः, अद्भुतशांतिः वैकृतशांतिः उत्पातशांतिः उपसर्गशांतिरिरितिचोच्यते। अद्भुतवैकृतोत्पातोपसर्गाणामेकार्थत्वात्॥ बालचिकित्सादिशांतयः रोगशांतयश्च प्रसवानिमित्तत्वान्नोपात्ताः ता अप्याकरे द्रष्टव्याः।

। इति शम्। ॥ छ ॥

अथाधोमुखजननशांतिः श्रीः॥ फलं भाष्ये द्रष्टव्यं। मातृपित्ररिष्टत्वाद्धोमुखप्रसवः। सग्रहमखा यामली शांतिः। संकल्पादौ तत्तन्नामोल्लेखः। इति अधोमुखजननशांतिः॥ अथ सदंतजननशांतिः। फलं भाष्ये द्रष्टव्यं। मातृपित्ररिष्टत्वाद्धोमुखप्रसवः। सग्रहमखा यामली शांतिः। संकल्पादौ तन्नामोल्लेखः॥ इति सदंतजननशांतिः॥ अथादंतजनने सदंतजननेऽपि अनंतरं उपरि प्रथमं दंतोत्पत्तौ शांतिः। फलं भाष्ये द्र०। मातृपित्ररिष्टत्वाद्धोमुखप्रसवः। सग्रहमखा यामली शांतिः। संकल्पादौ तन्नामोल्लेखः। इति उपरि प्रथमदंतोत्पत्तिशांतिः॥ अथ सदंतादंतजननयोरपि द्वितीयतृतीयचतुर्थपंचमान्यतममासे पुनर्दंतोत्पत्तौ च वैकृतप्रसवाभावान्न यामली शांतिः। किंतु। साप्ताहिकी पाद्मविष्णुधर्मोत्तरोक्तैव॥ गोमुखप्रसवः। आचमनादि संकल्पांतं। गणपतिपूजनादि अग्निप्रतिष्ठापनांतं। अग्नेः प्राक्पीठे अष्टदले कलशं प्रतिष्ठाप्य पूर्णपात्रे सौवर्णप्रतिमायां अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं। ॐ धातारातिः सवितेदंजुषन्ताम्प्रजापतिर्निधिपादेवोऽअग्निः॥ त्वष्टाविष्णुःप्प्रजयासꣳरराणायजमानायद्रविणन्दधात।८।१७। ॐ धात्रे नमः धातारं प्रतिष्ठापयामीति प्रतिष्ठाप्य। आवा-

हनादिषोडशोपचारैः संपूजयेत् । तदुत्तरतो ग्रहप्रतिष्ठापनं । रुद्रकलशप्रतिष्ठापनं । देवताया अधिवासनांते स्नानपीठात्परितः पूर्वादिप्रादक्षिण्येन सर्वौषध्योदकलशं १ सर्वगंधोदकलशं २ सप्तधान्योदकल० ३ पुष्पोदकल० ४ फलोदक० ५ पंचगव्योदकल० ६ पंचरत्नोदक० ७ सप्तमृत्तिकोदकलशं ८ एवमष्टौ कलशान्प्रतिष्ठाप्य पूजयेत् ॥ ततो बालकं स्नापयेत् ॥ गजपृष्ठे वा नौकायां वा हिरण्मयपीठे वा भद्रासनादिमंगलासने वा बालकमुपवेश्य वृद्धपतिपुत्रवतीभिः तं नीराजयित्वा सुगंधतैलादिनोद्वर्त्य सर्वौषध्युदकैः[1] सर्वगंधोदकैः[2] सप्तधान्योदकैः[3] पुष्पोदकैः[4] फलोदकैः[5] पंचगव्योदकैः[6] पंचरत्नोदकैः[7] सप्तमृत्तिकोदकैः[8] अष्टभिः कलशैर्मंगलवाद्यघोषपुरस्सरं स्नापयेयुः । आचार्यादयः अभिषेकमंत्रान्पठेयुः॥ ततो दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि आज्यभागांतं । ग्रहद्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । प्रधानहोमे होम्यं द्रव्यं चरुः होमसंख्या अष्टोत्तरशतं ।१०८। देवता धाता । मंत्रः ॐ धातारातिरिति । इदं धात्रे न ममेति त्यागः । प्रधानहोमांते ब्राह्मणभोजनं । इति प्रथमदिनकृत्यं । एवं सप्तदिनपर्यंतं प्रत्यहं गंधाद्युपचारैरधिवासितदेवतापूजनं । ऋत्विक्पूजनं । बालकस्य स्नापनं । प्रधानहोमः । ब्राह्मणभोजनं ॥ सप्तमे दिने प्रधानहोमांते पूजास्विष्टमित्यादीनि विसर्जनांतानि उत्तरांगानि ॥ ततः कांस्यपात्रे आज्यावलोकनं । सदक्षिणं तद्दानं । गोदानं भूमिदानं सुवर्णदानं रजतदानं सप्तधान्यदानं चेति विशेषः ॥ इति सदंतादंतजननयोरपि द्वितीयतृतीयचतुर्थपंचमान्यतममासे पुनर्दंतोत्पत्तौ पाद्मविष्णुधर्मोत्तरोक्ता साप्ताहिकी शांतिः ॥ अथ सदंतादंतजननयोरपि षष्ठेऽष्टमे वा मासि पुनर्दंतोत्पत्तौ तु अद्भुतसागरे (सग्रहमखा) बृहस्पत्युक्ता शांतिः ॥ गोमुखप्रसवः । आच-

मनादिसंकल्पांतं । गणपतिपूजनाद्यग्निप्रतिष्ठापनांतं । पीठे कलशप्रतिष्ठापनादिधातृदेवतापूजनांतं । ॐ धातारातिः मंत्रः । अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि प्रधानहोमांतं । होमद्रव्यं । दधिमधुघृताक्ताः अश्वत्थसमिधः । संख्या अष्टोत्तरशतं । ॐ इदं धात्रे न ममेति त्यागः । पूजास्विष्टमित्यादिविसर्जनांतं । इति षष्ठाष्टमयोः पुनर्दंतोत्पत्तौ सग्रहमखा बृहस्पत्युक्ता शांतिः ॥ अथ दंतजननसामान्ये विधानांतरं अद्भुतसागरे । पाद्मोक्ता सग्रहमखा पंचदशी शांतिः ॥ आचमनादिसंकल्पांतं । गणपतिपूजनाद्यग्निस्थापनांतं । अग्नेः प्राच्यां पीठे अष्टदलेषु वरुणपूजनांतं पंचकलशप्रतिष्ठापनं । सौवर्णप्रतिमासु अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं अग्निं सोमं वायुं हिमाचलादिपर्वतान् देवदेवं केशवं च तत्तन्मंत्रैरावाहनादिषोडशोपचारैः पूजयेत् । पूजनमंत्राः । अग्निमंत्रः । ॐ इडायास्त्वापदेवयन्नाभापृथिव्याऽअधि ॥ जातवेदोनिधीमह्यग्नेहव्यायवोढवे ॥ १ ॥ सोममंत्रः । ॐ त्वमिमाओषधीः सोमविश्वास्त्वमपोऽअजनयस्त्वंगाः ॥ त्वमाततंथोर्वन्तरिक्षंत्वंज्योतिषावितमोववर्थ ॥ २ ॥ वायुमंत्रः । ॐ वायुःपुनातुसवितापुनात्वग्नेर्भ्राजसासूर्यस्यवर्चसा ॥३॥ पर्वतमंत्रः । ॐ अस्मेरुद्रामेहनापर्वतासोवृत्र० देवाः ॥४॥ केशवमंत्रः । ॐ त्रीणिपदाविचक्रमे० धारयन् ॥५॥ इति देवतामंत्राः । देवताधिवासनांते । ग्रहप्रति० ॥ रुद्रकलशप्रति० । ततः स्नानशालायां भद्रासने बालकमुपवेश्य । वृद्धाभिः पतिपुत्रवतीभिस्तं नीराजयित्वा सुगंधितैलादिनोद्वर्त्य पंचकलशोदकैः मंगलवाद्यघोषपुरःसरं स्नापयेयुः । तेच पंचकलशा आदौ यथाविधि प्रतिष्ठाप्य पूजनीयाः । प्रथमो मूलकलशः १ द्वितीयः फलकलशः २ तृतीयः सर्वौषधीकलशः ३ चतुर्थः सर्वबीजकलशः ४ पंचमः सर्वगंधकलशः ५ ॥ आचा-

र्यादयो ऋत्विजो अभिषेकमंत्रान्पठेयुः । बालकस्य स्नापनांते । अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि आज्यभागांतं । ग्रहहोमांते प्रधानहोमः । हौम्यं घृतं । संख्या ।१०८। प्रतिदैवतं अष्टोत्तरशतं । होमे पूजोक्ता मंत्राः । प्रधानहोमांते । उत्तरांगानि । उत्तरपूजादिविसर्जनांतं ॥ इति सामान्ये दंतजनने पाद्मोक्ता पंचदशी शांतिः ॥ अस्यां शांतौ प्राधान्येनोपचाराः पंचदश ॥ १५ ॥ तेच । भद्रासनं १ मूलानि २ फलानि ३ सर्वौषधानि ४ सर्वबीजानि ५ सर्वगंधाः ६ अग्निः ७ सोमः ८ वायुः ९ प्रसिद्धा हिमाचलादयः पर्वताः १० विष्णुः ११ एताः पंच देवताः हौम्यं घृतं १२ होमार्थो अग्निः १३ ऋत्विजो ब्राह्मणाः १४ दक्षिणा १५ चेति । अतः पंचदशीति ॥ भागिनेयस्योपरि प्रथमं दंतोत्पत्तौ ब्रह्मयामलोक्ता मातुलकर्तृकाऽपि शांतिः । फलं भाष्ये ॥ मातुलः, आचम्य । प्राणाना० । पवित्रे धृ० । शांतिं पठित्वा । देशकालकीर्तनांते । संकल्पः । अस्य भागिनेयबालकस्य प्रथमं उपरिदंतजननेन जनिष्यमाणं मातुलस्य मे नानाविधक्लेशाद्यरिष्टं तद्विनाशनार्थं श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयामलोक्तं शांतिकं करिष्ये । इति संकल्पः । गणपतिपू० । स्वस्तिपुण्याहवाचनं । बालकं भद्रासने उपवेश्य । नीराजयित्वा । सुगंधतैलादिनोद्वर्त्य । मंगलवाद्यघोषपुरःसरं उष्णोदकेन स्नापयेयुः । स्नानोत्तरं पुनर्नीराजयित्वा । नूतनवस्त्रालंकारैर्भूषयित्वा । चंदनपुष्पमालाकज्जलादिभिरुपचारैरर्चयेत् । ततः सपत्नीको मातुलः दध्योदनेन संपूर्णं सौवर्णं राजतं ताम्रं कांस्यं वा पात्रमादाय भागिनेयस्य करे दद्यात् । तद्दानमंत्रः । ॐ रक्ष मां भागिनेय त्वं रक्ष मे सकलं कुलं । गृहीत्वा भाजनं सान्नं प्रसन्नो भव सर्वदा ॥ १ ॥ निर्विघ्नं कुरु कल्याणं निर्विघ्नं च

स्वमातरं । मय्यात्मानमधिष्ठाप्य चिरं जीव मया सह ॥ २ ॥ विप्रेभ्यः सप्तधान्यानि दद्यात् । ततो भागिनेयं स्वांके आरोप्य आलिंग्यच आशीर्दद्यात् । ब्राह्मणभोजनं । एतावदेव विधानं ॥ इति भागिनेयस्य प्रथममुपरिदंतोत्पत्तौ ब्रह्मयामलोक्ता मातुलकर्तृका शांतिः ॥ पादजातस्य (महाराष्ट्रभाषायां—पायाळु—इति प्रसिद्धस्य) जनने इयं सग्रहमखा यामली शांतिः। नात्र गोमुखप्रसवः ॥ इति प्रसववैकृतिकानि शांतिकानि ॥ अथ वृक्षवैकृतिका कदलीदुष्टप्रसवशांतिः ॥ फलं भाष्ये । प्रसूतिदिनादारभ्य दशाहांतं सूतिकेव सूतिकोपचारैः कदली उपचरितव्या । एकादशाहे शांतिकं ॥ कात्यायनीया निर्विशेषा यामली शांतिः । वचनांतरमाश्रित्य सर्वसाधारणः कदलीविषयको विशेष उच्यते । मरुतदेवताधिवासनांते कदलीपूजनं । वृद्धसुवासिनीभिः कदलीं नीराजयित्वा सुगंधतैलादिना अभ्यंगं कारयित्वा उष्णोदकेन स्नापयित्वा पीतवस्त्रेण त्रिसूत्र्या च वेष्टयित्वा कंचुकीं कंठसूत्रं च बध्वा सौभाग्यद्रव्यैर्भूषयित्वा मूले सौभाग्यवायनं निधाय, ॐ आकृष्णेनरजसा० पश्यन् ॥१॥ इति मंत्रेण सूर्यदेवत्यायै कदल्यै नमः सूर्यदैवत्यां कदलीमावाहयामि इति आवाहनादिषोडशोपचारैः कदलीं मूले संपूजयेत् । ततो दक्षिणतो ब्रह्मासनास्तरणादि श्रेयः संपाद्य दानांतं । दानावसरे तां कदलीं गंधादिपंचोपचारैः संपूज्य ब्राह्मणं च संपूज्य तस्मै ब्राह्मणाय तां कदलीं दद्यात् । कदलीदानमंत्रः । ॐ असुराणां कुलोत्पन्ना रंभा बहुफलान्विता ॥ अतस्तव प्रदानेन संततिर्मेऽभिवर्द्धतां ॥१॥ इति । ततोऽभिषेकः। ततस्तिलतैलप्रपूरिते महति कांस्यपात्रे मुखावलोकनं तद्दानं च तदुपरि रजतदानं । विसर्जनं । ब्राह्मणभोजनं । आशीर्ग्रहणं ॥ इति वृक्षवैकृतिका सग्रहमखा कदलीदुष्टप्रसवशांतिः ॥

## अथ शौनकोक्ता षष्टितमवर्षे ६० औग्ररथी शांतिः ।

॥ श्रीः ॥ शौनकः ॥ अथातः संप्रवक्ष्यामि शांतिं चोग्ररथस्य च । ब्राह्मणः क्षत्रियो वैश्यः शूद्राणां चैव योषितां । यदि स्यात्षष्टिवर्षं तु तदा मृत्युर्भवेद्ध्रुवं । दुःस्वप्नानि च जायंते मातापित्रोर्मृतिस्तथा । भार्यापुत्रवियोगश्च रोगाग्न्यादिभयं तथा । ग्रहपीडा राजभयं रोगाश्च विविधाश्च ये । दंतरोगा दृष्टिमांद्यं छाया च विकृतिस्तथा ॥ नक्षत्राणि न दृश्यंते ध्रुवादीनि स्फुटान्यपि । भूतप्रेतपिशाचाद्या दृश्यंते विविधाश्च ये । एते चान्ये महोत्पाता जायंते षष्टिवत्सरे । अरिष्टपरिहारार्थं शांतिं वक्ष्यामि शौनकः । लोभादनादराद्यस्तु शांतिकर्म न कारयेत् । तस्मिन्वर्षे भवेन्मृत्युः सत्यमेव न संशयः । मृत्योरेव, अन्वयव्यतिरेकाभ्यामुपसंहारात् उग्ररथो मृत्युरूपो गर्तः । उग्रश्चासौ रथश्चेति कर्मधारयः । रथशब्दो गर्तवाची । तथाच निरुक्तं । अ० ३ पा. १ खं. ६ । रथोऽपि गर्त उच्यते । गृणातेः स्तुतिकर्मणः । स्तुततमं यानं । आरोहथोवरुणमित्र-गर्तमित्यपि निगमो भवति इति । ऋ. सं. ४।३।२१।३॥ ब्राह्मणादयो योषिदंतास्त्वत्राधिकारिणः । यदि स्यादित्यारभ्य जायंते षष्टिवत्सरे इत्यंतं षष्टिवर्षप्रवेशफलं । अरिष्टपरिहारार्थमिति तदपनोदकं नैमित्तिकं विधीयते । तस्मिन्वर्षे जन्मदिनं जन्मर्क्षं वा यदा भवेत् । इति शांतिककालः । तस्मिन्दिने तु संप्राप्ते मंगलस्नानमाचरेत् । दैवज्ञोक्ते शुभे काले चंद्रताराबलान्विते । नित्यकर्माणि निर्वर्त्य ब्राह्मणानभिमंत्र्य च । आचार्यलक्षणं, तद्वरणं लौकिकामंत्रणं । अग्रेनांदीश्राद्धानंतरंवैध-वरणोक्तेः । आचार्यं वरयेदादौ वेदवेदांगपारगं । आचारवंतं धर्मज्ञं शांतिकर्माणि कोविदं । कामक्रोधविहीनं च रागद्वेष-

विवर्जितं॥ विधिः । गणेशं पूजयेदादौ ततः पुण्याहवाचनं । मातृकाः पूजयित्वा तु नांदीश्राद्धमतः परं । आचार्यब्रह्मवरणमन्वाधानं ततः परं। सर्वौषधीः समानीय पंचत्वक् पंचपल्लवं। पंचरत्नं पंचगव्यं पंचामृतं ततः क्षिपेत् । कलशं च समानीय ग्रहातिथ्यपुरःसरं । नव ग्रहान् समाराध्य मार्कंडेयं प्रधानकं । पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः । मार्कंडेयस्य प्रतिमां कारयेच्च सुवर्णतः। प्रतिमां स्थापयेत्कुंभे वस्त्रयुग्मेन वेष्टयेत् । उपचारैः षोडशभिः संपूज्य च विधानतः । अत्र मार्कंडेयः प्रधानदेवता । तत्प्रतिमा सौवर्णी। पलं पलार्धं पलार्द्धार्द्धं वेति प्रतिमामानं । पलादिमानलक्षणं अग्निमायां भैमरथ्यां शांतावुच्यते ॥ समिदाज्यचरुद्रव्यैर्दूर्वाभिः परमान्नकैः । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । प्रत्येकं जुहुयादत्र मार्कंडेयेति मंत्रतः । होमद्रव्याणि पंच । यज्ञियसमिधः १ आज्यं २ चरुः ३ दूर्वाः ४ परमान्नकं पायसं पयसि श्रृतश्चरुरित्यर्थः ॥ ५ ॥ अष्टोत्तरसहस्रं १००८। अष्टोत्तरशतं १०८ तु वेति होमसंख्याविकल्पः । प्रत्येकं प्रतिद्रव्यं संख्येति । मंत्रस्तु—मार्कंडेय महाभाग सप्तकल्पांतजीवन । आयुरारोग्यमैश्वर्यमायुष्यं ते प्रयच्छ मे ॥ १ ॥ मृत्युंजयं समुद्दिश्य दूर्वामिश्र तिलैः सह । अयुतं वाऽर्द्धमयुतं त्रिसहस्रं सहस्रकं । होमं कृत्वा विधानेन उपदेवान् यजेत्पृथक् । सहेत्यस्योभयत्रान्वयात् दूर्वामिश्रितास्तिलाः तिलमिश्रादूर्वा वा एकं द्रव्यं । अयुतं दशसहस्रं १०००० अर्द्धमयुतं ५०००। त्रिसहस्रं ३०००। सहस्रकं १०००। इति होमसंख्याविकल्पः । अश्वत्थामा[1] बलिर्[2]व्यासो[3] हनुमांश्च[4] बिभीषणः[5] । कृपः[6] परशुरामश्च[7] एतांश्चैव पृथक् पृथक् । लाजहोमं प्रकुर्वीत यथाविभवविस्तरं । सप्त अश्वत्थामादयः उपदेवाः । सर्वेषां हौम्यं लाजा एव ।

यथाविभवविस्तरमिति होमसंख्याया द्रव्यमानेन पाक्षिकं वैभवं । श्रीसूक्तं रुद्रजाप्यं च आयुष्यं पौरुषं तथा । वेदपारायणं चैव कर्तव्यं च विशेषतः । होमशेषं समाप्याथ पुर्णाहुतिमथापरं । कलशोदकमादाय अभिषेकं तु कारयेत् । यजमानं सपत्नीकं बंधुवर्गैः समन्वितं । शांतिसूक्तं पुरुषसूक्तं परंमृत्योस्तथैवच । आयुष्यं पावमानं च शिवसंकल्पषडर्चं । महाशांतीः प्रजप्याथ कलशं च प्रदापयेत् । अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् । सालंकारां सवत्सां च गामाचार्याय निवेदयेत् । दश दानानि विप्रेभ्यः सुवर्णं शतमानकं । अवेक्ष्याज्यं प्रदद्याच्च तिलदानं तथैवच । ब्राह्मणेभ्यो[1]शिषो ग्राह्या नववस्त्रं तु धारयेत् । नीराजनं प्रकुर्वीत देवताश्चाभिवादयेत् । ब्राह्मणान् भोजयेत्पश्चात्सहस्रं वा शतं तु वा । बंधुभिः सह भुंजीत दीर्घायुष्यं च विंदति । एवं यः कुरुते सम्यक् ग्रहशांतिविधानतः । तस्यायुः शतवर्षांते भवेदिति विनिश्चितं । सर्वारिष्टविनाशं तु सर्वसंपद्भविष्यति । इति शौनकोक्तानि षष्ठ्यब्दवर्षे औग्ररथशांतिमूलानि । श्लोकाः ॥ २१ ॥ ॥छ॥

॥ श्रीः ॥ अथ सग्रहमखा शौनकोक्ता षष्ठ्यब्द ६० वर्षे औग्ररथी शांतिः ॥ आच० । प्राणा० । पवित्रधा० । शांतिसूक्तपाठः । देशकालसंकीर्तनं । प्रधानसंकल्पः । अमुकगोत्रस्य अमुकशर्मणः मम जन्मकालतः संजातषष्ठ्यब्दकालनिमित्त संभाव्यमान दुःस्वप्न भार्यापुत्रवियोग मातृपितृमृति नानाविधरोग ग्रहपीडा राजाग्निभय दंतरोग दृष्टिमांद्य छायावैकृत्य ध्रुवादिनक्षत्राद्यदर्शन भूतप्रेतपिशाचादिपीडा महोत्पाताद्यरिष्ट परिहारपूर्वकं स्व(स्वाप)मृत्युपरिहारार्थं अनिष्टस्थानस्थित

१-ब्राह्मणेभ्यः, आशिषः, एवमत्र पदच्छेदः । अयं संधिस्त्वार्षः ।

आदित्यादिग्रहकृत अनेकविधारिष्टविनाशनार्थंच दीर्घायुरारोग्य पुत्रपौत्रादि सर्वसंपद्भवनद्वारा आदित्यादिग्रह श्रीमार्कंडेय मृत्युंजयादि देवताप्रीत्यर्थं शौनकोक्तां सग्रहमखां औग्ररथीं शांतिं करिष्ये । इति संकल्पः ॥ गणपतिपूजनादि नांदीश्राद्धांतं । आचार्यादिऋत्विग्वरणं । मधुपर्कः । दिग्रक्षणादि भूमिपूजनांतं । स्थंडिले पंचभूसंस्कारपूर्वकमग्निप्रतिष्ठापनं । अग्नेः प्राच्यां पीठे अष्टदलोपरि ॐ महीद्यौरित्यादि=प्रसन्नो भव सर्वदेत्यंतं कलशप्रतिष्ठापनं । ततः सौवर्णप्रतिमायां अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं । ॐ मार्कंडेय महाभाग सप्तकल्पांतजीवन ॥ आयुरारोग्यमैश्वर्यमायुष्यं ते प्रयच्छ मे ॥ १ ॥ इति मंत्रेण ॐ मार्कंडेयाय नमः मार्कंडेयमावाहयामीत्यावाह्य षोडशोपचारैः पूजयेत् । ततोऽष्टदलेषु कलशस्य परितः प्रागादिप्रादक्षिण्येन अष्टदिक्षु मृत्युंजयं अश्वत्थामादीन् सप्त उपदेवांश्चावाहयेत् ॥ प्राच्यदले ॥ ॐ मृत्युंजयाय नमः मृत्युंजयं आवा० १ आग्नेयदले ॐ अश्वत्थाम्ने नमः अश्वत्थामानं आवा० २ दक्षिणदले ॐ बलये नमः बलिं आ० ३ नैर्ऋत्यदले ॐ व्यासाय नमः व्यासं आ० ४ पश्चिमदले ॐ हनुमते० हनुमंतं आ० ५ वायव्यदले ॐ बिभीषणाय नमः बिभीषणमावा० ६ उत्तरदले ॐ कृपाय नमः कृपं आ० ७ ऐशानदले ॐ परशुरामाय नमः परशुरामं आ० ८। इत्यावाह्य । ॐ मृत्युंजयादिदेवताभ्यो नमः इति गंधाद्युपचारैः संपूज्य । मार्कंडेयादीन् प्रार्थयेत् । ॐ मार्कंडेय महाभाग सप्तकल्पांतजीवन ॥ आयुरारोग्यमैश्वर्यमायुष्यं ते प्रयच्छ मे ॥ १ ॥ ॐ मृत्युंजयाय रु० वे ॥ अमृते० ते नमः ॥ २ ॥ ॐ द्रौणे मे त्वं महाभाग रुद्रतेजःसमुद्भव ॥ आयुर्बलं यशो देहि अश्वत्थामन्नमोऽस्तु ते ॥ ३ ॥ ॐ दैत्येंद्रकुलसंभूत यज्ञदानक्रियारत ॥

बले त्वां शरणं यामि दीर्घमायुः प्रयच्छ मे ॥ ४ ॥ ॐ वसिष्ठकुलसंभूत वेदशास्त्रविशारद ॥ नारायणांशसंभूत वेदव्यास नमोस्तु ते ॥ ५ ॥ ॐ अंजनागर्भसंभूत कपींद्रसचिवोत्तम ॥ रामप्रिय नमस्तुभ्यं हनुमन्रक्ष मां सदा ॥ ६ ॥ ॐ बिभीषण नमस्तुभ्यं रामपादाब्जपूजक ॥ आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनंदन ॥ ७ ॥ ॐ द्विजेंद्र भरताचार्य सर्वविद्याविशारद ॥ शरणं त्वां प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥ ८ ॥ ॐ रेणुकेय महावीर्य कार्तवीर्यकृतांतक ॥ आयुः प्रयच्छ मे राम जामदग्न्य नमोस्तु ते ॥ ९ ॥ इति संप्रार्थ्य । तदुत्तरतो ग्रहप्रतिष्ठापनं । तदीशान्यामुदग्वा रुद्रकलशप्रतिष्ठापनं ॥ ततोऽग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि आज्यभागांतं । तत्र सक्षीरप्रणीताप्रणयनमिति विशेषः । द्रव्यत्यागः । ग्रहहोमः । ततः प्रधानहोमः । होमद्रव्यं ॥ ५ ॥ यज्ञियसमिधः । आज्यं । चरुः । दूर्वाः । पायसं चेति । प्रतिद्रव्यं होमसंख्या । अष्टोत्तरसहस्रं । अष्टोत्तरशतं वा । १००८।१०८ । वा । होममंत्रः ॐ मार्कंडेय महा भागेति पूजोक्त एव । ततो मृत्युंजयहोमः । होमद्रव्यं । दूर्वामिश्रितास्तिलाः । तिलमिश्रा दूर्वा वा । एकं द्रव्यं । होमसंख्या । अयुतं दशसहस्रं १०००० अयुतार्द्धं पंचसहस्रं ५००० त्रिसहस्रं ३००० सहस्रं १००० वा ॐ त्र्यंबकमिति होममंत्रः । होमांते उदकोपस्पर्शः । ततः सप्तोपदेवहोमः । सर्वेषां हौम्यं लाजा एव । होमसंख्या प्रत्येकं अष्टोत्तरशतं १०८ अष्टाविंशति २८ अष्टौ ८ वा ॥ मंत्राः प्राग् प्रार्थनोक्ता नाममंत्रा वा ॥ होमांते सूक्तजपः । श्रीसूक्तं । अग्निपुराणे । अ० २६३ । श्रीसूक्तं प्रतिवेदं च ज्ञेयं लक्ष्मीविवर्धनं । हिरण्यवर्णां हरिणीमृचः पंचदशश्रियः ॥१॥ ऋग्वेदे इति शेषः । सिंहे व्याघ्र उतयापृदाकौ । याराज-

न्यैंदुंदुभावायंतायां । याहस्तिनिंद्वीपिनियाहिरंण्ये । रथें अक्षेषुं वृषभस्य वाजें (इ)ति चतस्रो यजुषि श्रियः ॥ २ ॥ स्रावं-
तीयं तथा साम श्रीसूक्तं सामवेदके ॥ ३ ॥ श्रियं धातर्मयि धेहि प्रोक्तमाथर्वणे तथा । श्रीसूक्तं यो जपेद्भक्त्या हुत्वा
श्रीस्तस्य वै भवेदिति ॥ ४ ॥ यजुषि कृष्णयजुर्वेदे । कां० २ प्र० ७ अ० ७ ॐ सिंहेव्याघ्रउतयापृदाकौ ॥ त्विषिरग्नौ-
ब्राह्मणेसूर्येया ॥ इंद्रंयादेवीसुभगां जनानं ॥ सानआगन्वर्चसासंविदाना ॥ १ ॥ याराजन्येंदुंदुभावायंतायां ॥ अश्वस्यक्रं-
द्येपुरुषस्यमायौ ॥ इंद्रंयादेवीसुभगांजजानं ॥ सानआगन्वर्चसासंविदाना ॥ २ ॥ याहस्तिनिं द्वीपिनियाहिरंण्ये ॥ त्विषि-
रश्वेषुपुरुषेषुगोषुं ॥ इंद्रंयादेवीसुभगां जजानं ॥ सानआगन्वर्चसासंविदाना ॥ ३ ॥ रथेंअक्षेषुंवृषभस्यवाजें ॥ वातेंपर्जन्ये-
वरुंणस्यशुष्मैं ॥ इंद्रंयादेवीसुभगांजजानं ॥ सानआगन्वर्चसासंविदाना ॥ ४ ॥ इति कृष्णयाजुर्वेदिकं चतुर्ऋचं श्रीसूक्तं ॥
ॐ नमस्तेरुद्रेत्यादिः षोडशो १६ रौद्रोऽध्यायः । आयुष्यं सूक्तं । ॐ आयुष्यं वर्चस्यं १ नतद्रक्षांसि २ यदाबध्नन्दा-
क्षायणा० ३ । इति त्र्यर्चं । अ० ३४ । ५०=५३ । पौरुषं सूक्तं । ॐ सहस्रशीर्षापुरुषः० इत्यादि षोडशर्चं १६ । अ०
३१।१=१६ ॥ वेदपारायणंच ॥ तत उत्तरांगानि । पूजा स्वि० श्रेयः संपाद्य दानं । अभिषेकः । तत्र महाशांतिमंत्राः ।
शांतिसूक्तं ऋचंवाचमित्यध्यायः । पुरुषसूक्तं । परंमृत्यविति मंत्रः । आयुष्यं सूक्तं आयुष्यमिति त्र्यर्चं । पावमानं यद्दे-
वादेवहेडनमिति त्र्यर्चं पुनंतुमेति नवर्चं वा । शिवसंकल्पसूक्तं यज्जाग्रतइत्यादि षडर्चं । इति महाशांतिमंत्राः । ततः
स्नात्वा । अभिषेकाप्लुतं वस्त्रमाचार्याय दद्यात् । तत आचार्यं संपूज्य । तस्मै सालंकारां सवत्सां पयस्विनीं गां दद्यात् ।

ब्राह्मणेभ्यो दश दानानि । तथा दक्षिणां शतमानं सुवर्णं च दद्यात् । सौवर्णं शतमानं शतरक्तिका (गुंजा)परिमितं सुवर्णं । तथाच कात्यायनसूत्रे "शतमानं दक्षिणा सौवर्णं" "हिरण्यपरिमाणेऽन्यत्रापि" । २०।१।२२=२३। अत्र कर्कभाष्यं । शतसंख्यामितं सुवर्णं । तच्चावमया मात्रया मितं भवति । अवमा च मात्रा रक्तिका । हिरण्यपरिमाणे मृग्ये अन्यत्रापि दाक्षायणादौ शतमानमेव भवतीति ॥छ॥ कांस्यपात्रे आज्यावेक्षणं । सदक्षिणं तद्दानं च । तिलदानंच । नूतनवस्त्रधारणं । नीराजनं । आशीर्ग्रहणं । सहस्रं शतं वा ब्राह्मणभोजनं । देवतानामग्नेश्च विसर्जनं । यस्य स्मृत्येत्यादि कर्मसमाप्तिः॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिककांडे शौनकोक्तः सग्रहमखः षष्टितमवर्षे औग्ररथीशांतिप्रयोगः ॥

अथ सप्तत्यब्दिका भैमरथी शांतिः ॥ श्रीः ॥ अथ सप्तत्यब्दि ७० का भैमरथी शांतिः ॥ बृहच्छौनकीये ॥ अथ भैमरथीं शांतिं भगवाञ्छौनकोऽब्रवीत् ॥ जननात्सप्ततौ वर्षे मृत्युर्भीमरथो भवेत् । षण्मासान्मृत्युमाप्नोति धनहानिस्तथैव च । पुत्रदारादिनाशश्च द्रव्यधान्यपशुक्षयः । तद्दोषशमनार्थाय भगवाञ्छौनकोऽब्रवीत् । वर्षे इत्यत्र प्रवर्तमाने इति शेषः । मृत्य्वादिः पशुक्षयांतं दुष्टं फलं । जन्मर्क्षे वाऽनुकूलर्क्षे शांतिं कुर्याद्विचक्षणः । असौ शांतिककालः । देवालये नदीतीरे स्वगृहे वा शुभस्थले । अयं शांतिकदेशः ॥ अथ विधिः । गृहस्येशानादिग्भागे मंडपं कारयेदथ । गृहस्येति देवालयादीनामुपसंग्राहकं ॥ व्रीहिभारं तु निक्षिप्य तंडुलांस्तु तदर्द्धकं । तदर्धकं भारार्द्धकं । तदर्धं तिलभारं स्यात्पद्ममष्टदलं स्मृतं । तदर्धं भारार्द्धस्यार्धं ॥ भारमानमभिधानकोशटीकायां । पलं प्रकुंचकं मुष्टिः कुडवस्तच्चतुष्टयं । चत्वारः कुडवाः

प्रस्थश्चतुष्प्रस्थं तथाऽऽढकं । अष्टाढको भवेद्द्रोणो द्विद्रोणः शूर्प उच्यते । सार्धः शूर्पो भवेत्खारी द्विशूर्पा द्रोण्युदाहृता । तमेव भारं जानीयाद्वाहो भारचतुष्टयमिति । पलं १ प्रकुंचकं २ मुष्टिः ३ त्रयः शब्दा मुष्टिवाचकाः । निकुंचकशब्दोपि मुष्टिवाचकः । खारीवाहो निकुंचक इत्यमरात् । मुष्टिचतुष्टयं कुडवः ( पावशेर ) कुडवमानपात्रं अमरकोशटीकायां । मृद्वेणुकाष्ठलोहादेः पात्रं यच्चतुरंगुलं । विस्तीर्णंच तथोच्चंच तन्मानं कुडवं वदेत् । इति । मानपात्रोन्मितंवा कुडवो भवति । चत्वारः कुडवाः प्रस्थः १ (शेर)प्रस्थचतुष्टयं ४ आढकं १ (पायली) अष्टावाढकानि ८ द्रोणः १ (अदमणी=अर्धामण)द्वौ द्रोणौ २ शूर्पः १ (मण १) सार्धः शूर्पः=दीडमण=खारी १ । द्वौ शूर्पौ २ ( दोनमण )द्रोणी=१ द्रोण्येव भारः । द्रोणीभारावेकार्थौ । (दोनमण) भारचतुष्टयं ४ (आठमण) वाहः १ । इतिभारमानश्लोकार्थः । टीकायामन्यच्च मानांतरं । अष्टमुष्टिभवेत्किंचित्किंचिदष्टौ तु पुष्कलं । पुष्कलानि तु चत्वारि आढकः परिकीर्तितः । चतुराढको भवेद्द्रोणः इत्येतन्मानलक्षणमिति । अग्रे द्वौ द्रोणौ भारः । भारचतुष्टयं वाहः । इति तदर्थो बोध्यः॥ ततश्च व्रीहयो भारमिताः (दोनमण २) तदुपरि तंडुलाः भारार्द्धमिताः (एकमण) तदुपरि तिलाः भारार्धार्धमिताः (अर्धामण) तदुपरि अष्टदलं पद्ममित्यर्थः । तस्योपरि न्यसेत्कुंभान् तंतुवस्त्रादिवेष्टितान् । तस्योपरि अष्टदलस्योपरि । कुंभान् बहुवचनेन प्रधानाधिप्रत्यधिदेवतानां इति त्रीन् ॥ ३ ॥ प्रधानदेवतामाह । ह्रींकारोपरि विन्यस्य भीमं मृत्युंजयं यजेत् । ह्रीमिति बीजं पूर्णपात्रे विलिख्य तदुपरि नामतो भीमं नामैकदेशन्यायेन भीमरथं रुद्रं यजेत् । मृत्युंजयमिति तद्गुणः । भीमरथप्रतिमाया द्रव्यं तन्मानं चाह ।

पलमात्रं सुवर्णेन तदर्धार्द्धेन वा पुनः । सुवर्णेनेति द्रव्यं। पलं तदर्धं तदर्धार्धं वेति मानं । पलमानममरकोशे । ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयं । तच्छब्देन माषाः। अधिप्रत्यधिदेवौ तद्द्रव्यं तन्मानं च । महावरुणमभ्यर्च्य लोकपालादिकानथ। अधिप्रत्यधिदेवौ च तदर्धेन प्रकल्पयेत् । महावरुणेऽपां पतिरधिदेवः। इंद्रादयो लोकपालाः प्रत्यधिदेवः। अधिप्रत्यधिदेवाविति द्विवचनेनेंद्रादिलोकपालानां समुदितानामेव देवतात्वं न पृथक् पृथक्। ततश्चैका प्रतिमा। द्रव्यं सुवर्णमेव। तद्विशेषानुक्तेः। मानं तदर्धं पलार्द्धं पलार्धस्यार्धं वा । आचार्यं वरयित्वा तु ऋत्विजो वरयेदथ। उपचारैः षोडशभिः प्रधानं देवमर्चयेत् । यथोक्तपूजां कृत्वा तु तत्तन्मंत्राञ्जपेदथ । स्तुहिश्रुतेति मंत्रेण प्रधानं जपमाचरेत्। "स्तुहिश्रुत"मिति भीमपदलिंगो रौद्रो मंत्रः प्रतिवेदांतरे तद्दर्शकः। वाजसनेयिनां तथाविधो ॐ "नमउग्रायचभीमायचे"तिभीमपदलिंगो रौद्रः षोडशाध्यायपठितो यजुर्मंत्रः। नतु एकोनचत्वारिंशाध्यायपठितो उग्रश्चभीमश्चध्वांतश्चेति ऋग्रूपो यजुर्मंत्रः। तस्य मरुद्देवताकत्वात्। तथाच सर्वानुक्रमण्यां कात्यायनः। "उग्रश्च मारुती गायत्री विमुखाख्यो मंत्रोऽश्वौ विनियुक्तः"। इति ॥ वेदपारायणजपं ततो द्वारजपं तथा। नमकं चमकं चैव श्रीसूक्तं भीमसूक्तकं। भीमसूक्तं मृत्युंजयमिति तद्गुणान्मृत्युंजयसूक्तं रौद्रं सूक्तमिति यावत्। मंडपात्पश्चिमे भागे कुंडं स्याच्चतुरस्रकं। स्वसूत्रोक्तेन मार्गेण आज्यभागांतमाचरेत्। प्रधानमंत्रकैः कुर्यात्समिच्चर्वाज्यकैः क्रमात्। नवग्रहाणां होमंच तिलद्रव्येण कारयेत्। अष्टोत्तरं सहस्रं वा अष्टोत्तरशतं तु वा॥ प्रधानहोमः कर्तव्यस्तिलैर्होमस्तथैवच। वरुणं लोकपालांश्च ह्यधिप्रत्यधि-

देवेत । ततः स्विष्टकृतं कृत्वा ग्रहयज्ञं समापयेत् । नवाहुतिबलिदानपूर्णाहुत्याद्युत्तरांगैः । यजमानाभिषेकं च आचार्यः कारयेदथ । यजमानः स्वलंकृत्य ह्याज्यावेक्षणमाचरेत् । कुंभदानं ततः कुर्याद्दशदानानि कारयेत् । कुंभः आज्यावेक्षणकुंभः । तद्दानं । दीनांधकदरिद्रेभ्यो भूरिदानं तु कारयेत् । ब्राह्मणान् भोजयेत्पश्चादाशिषो वाचयेदथ । सर्वदुःखनिवृत्तिः स्यात् सर्वदा सुखमेधते । शत्रवोपि हि नश्यंति पुत्रपौत्रप्रवर्द्धनं । हरिमेव स्मरेन्नित्यं कर्म पूर्वापरेति च ॥ इति बृहच्छौनकीये सप्तत्यब्दिका भैमरथी शांतिः ॥ अथ प्रयोगः ॥ सप्ततिवर्षांतः षण्मासात्प्राक् जन्मर्क्षे अनुकूलर्क्षे वा देवालये नदीतीरे स्वगृहे शुभस्थले वा । देवालयादीनामैशाने शांतिककर्ममंडपे मंडपाभ्यंतरे पश्चिमस्यां एकहस्तं चतुरस्रं कुंडं विधाय मंडपमध्ये प्रधानवेदीं तदुत्तरतो ग्रहवेदीं च कुर्यात् ॥ आच० । प्राणा० । पवि० । शांतिसूक्तपाठः । देशकालसं० । संकल्पः अमुकगोत्रस्यामुकशर्मणो मम जन्मनः सकाशात् प्रवर्तमाने सप्ततिवर्षे तद्वर्षप्रवेशनिमित्तेन षण्मासादूर्ध्वं उत्पत्स्यमानानां मृत्युधनधान्यद्रव्यपशुक्षय पुत्रदारादिनाशाद्यरिष्टानां निरसनार्थं जन्मनामराश्योः सकाशात् विरुद्धस्थानस्थितादित्यादिग्रहजनिष्यमाणारिष्ट निरसनार्थं शत्रुनाश सर्वदुःखनिवृत्ति पूर्वक पुत्रपौत्राभिवृद्धि सार्वकालीन सुखाभिवृद्धये च आदित्यादिग्रहानुकूल्यतायै मृत्युंजय भीमरथ देवताप्रीतये च बृहच्छौनकोक्तां सग्रहमखां भैमरथीं शांतिं करिष्ये । इति संकल्पः ॥ गणपतिपूजनादि नांदीश्राद्धांतं । ब्रह्माचार्यादिऋत्विग्वरणं । मधुपर्केण तेषां पूजनं दिग्रक्षणादि पंचभूसंस्कारपूर्वकाग्निप्रतिष्ठापनांतं ॥ प्रधानवेद्यामास्तृते वस्त्रे भारमितान् ( मण २ ) व्रीहीन्निक्षिप्य तदुपरि भारार्धमितान् ( मण १ ) तंडुलान्निक्षिप्य

तदुपरि भारार्धार्धमितान् ( अर्धामण ) तिलांश्च निक्षिप्य तदुपरि तंडुलैरष्टदलं विदधीत । अष्टदले मध्ये प्रधानकलशं तद्दक्षिणे अधिदेवकलशं प्रधानघटवामतः प्रत्यधिदेवकलशं एवं क्रमेण रक्तसूत्रेण वाससा च वेष्टितान् त्रीन् कलशान् ॐ महीद्यौरित्यादि=प्रसन्नो भव सर्वदेत्यंतं मंत्रावृत्त्या स्थापयेत् ॥ ततस्तिसृषु सौवर्णप्रतिमासु अग्न्युत्तारणं कृत्वा मध्यमप्रतिमायां प्राणप्रतिष्ठापूर्वकं ॐ त्र्यंबकंयजामहे० माऽमृतात् ॥ १ ॥ ॐ नमउग्रायचभीमायच ॥ २ ॥ इति मंत्रेण ॐ मृत्युंजयाय भीमरथाय नमः मृत्युंजयं भीमरथमावाहयामीत्यावाह्य तद्दक्षिणप्रतिमायां ॐ अपांम्पतिरसिराष्ट्रदाराष्ट्रममुष्मैदेहि ॥ १ ॥ इति मंत्रेण ॐ आपो मरीचीः परिपांतु सर्वतो धाता समुद्रो अपहंतु पापं ॥ भूतं भविष्यदकृंतद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्यां ॥ १ ॥ पा. गृ. सू. कां. ३ कं. ३ । इति सौत्रमंत्रेण वा । ॐ अपां पतये नमः अपांपतिमधिदेवमावाहयामीत्यावाह्य । वामप्रतिमायां ॐ देवाऽआशापालाऽएतंन्देवेभ्योऽ श्वंम्मेधायप्रोक्षितꣳरक्षत ॥ १ ॥ इतिमंत्रेण ॥ ॐ आशापालेभ्यो नमः आशापालान् प्रत्यधिदेवमावाहयामीत्यावाह्य षोडशोपचारैः पूजयेत् ॥ ततो देवतासन्निधौ तत्तद्देवतामंत्रजपः वेदपारायणं पूर्वादिद्वारसूक्तजपः नमकजपः चमकजपः श्रीसूक्तजपः रौद्रसूक्तजपश्च ब्राह्मणैरनुष्ठेयः । तदर्थं तेषां वरणं च । ततस्तदुत्तरतो ग्रहवेद्यां ग्रहप्रतिष्ठापनं । रुद्रकलशप्रतिष्ठापनंच । । ततोऽग्नेर्दक्षिणतोब्रह्मसनास्तरणादि आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । प्रधानहोमे घृताक्तास्तिलाः एकमेव हौम्यं । होमसंख्या अष्टोत्तरसहस्रं अष्टोत्तरशतं वा १००८ । १०८ । होममंत्रा आवाहनोक्ता एव । । तत उत्तरांगानि पूजा

स्विष्टं० अभिषेकांते यजमानः (स्नात्वा) स्वलंकृत्य कुंभगते आज्ये मुखावलोकनं कुर्यात् । ततः सदक्षिणमाज्यकुंभदानं । ततो गोदानं । दश दानानि च । आशीर्वाचनं । विसर्जनं । ब्राह्मणभोजनं । यस्य स्मृत्येति विष्णुस्मरणं ॥ इति शुक्लयजुः-शाखीयकर्मकांडप्रदीपे जननशांतिककांडे बृहच्छौनकोक्ता सप्तत्यब्दिका ७० भैमरथी शांतिः समाप्ता ॥ ॥

श्रीः ॥ द्वादशाब्दादूर्ध्वमवलोकनविधिः । अघोरग्रहशांतिः ॥ अथ विशिष्टसगोत्रासगोत्रसपिंडानां द्वादशाब्दादूर्ध्वमवलोकनविधिः । सूर्यारुणसंवादे । दंपती पितृपुत्रौ च स्वसारौ भ्रातरौ तथा । पितृव्यो मातुलश्चैव दौहित्रो भागिनेयकः । पुत्रिकापितरौ चैव भगिनीभ्रातरौ तथा । द्वादशाब्दे व्यतीते तु दूरदेशं गतो यदि । एतेषामेकमेकोऽपि नान्योऽन्यमवलोकयेत् । इच्छंति केचिदाचार्या अन्योऽन्यमवलोकनं । गणेशमृत्युंजयविष्णुलक्ष्मीमघोरसंज्ञं च ग्रहं घटेषु । आवाह्य संपूज्य च धान्यराशौ होमं च कुर्यादिह देवमंत्रैः । शिवपूजां प्रकुर्वीत प्रतिमापूजनं ततः । अघोरप्रतिमां दद्याद्ब्राह्मणाय सदक्षिणां । अनेन सह गच्छ त्वं क्रीडस्व च सुखं चिरं । मां तथैवाधुना मुंच क्षमां कुरु ममोपरि । शिवाग्रे तु समागत्य कृत्वा चैवांतरे पटं । उभाभ्यां नारिकेलं च भङ्त्वा भूयोऽभिगम्यतां । निवर्तध्वमिति चोक्त्वादावघोरद्विजपुंगवं । विसर्जयेत्पुनस्तं च नैव पश्येत्कदाचन । कांस्यपात्रे घृतं कृत्वा दृष्ट्वा रूपं स्वकं स्वकं । तत्पात्रं ब्राह्मणे दद्याद्दक्षिणासंयुतं ततः । पादप्रक्षालनं कृत्वा आचम्य च यथाविधि । शांतिमंत्रान् पठेत्पश्चात्पूजां गृह्य शिवं व्रजेत् । धूपदीपादिनैवेद्यतांबूलैर्दक्षिणादिभिः । वस्त्रैराभरणैर्दिव्यैस्तोषयेच्छंकरं ततः । शिवं प्रार्थ्य स्वस्तिनश्च आनोभद्रा कनिक्रदत् । प्रदक्षिणि भद्रंवदेति पठेत्सूक्तं शिवो-

परि । पुष्पांजलिंच युगपद्दद्याच्चैवांतरं पटं । पुनः पुनर्नमस्कृत्य पश्चात्तंच विलोकयेत् । प्रणामालिंगने कुर्यात्स्वागतं क्षेम-पृच्छनं । ततो द्विजवराः सर्वे सूक्तानि स्वस्तिकानि च । स्वस्तिकानि मंगलानि सूक्तानि । पठंतो होमदेशं च गच्छेयुश्च मुदान्विताः । प्रतिमापूजनं कृत्वा वह्नेश्चापि यथाक्रमं । दूर्वातिलाज्यचरुभिः शर्कराभिर्यथाक्रमं । देवमंत्रैर्देवतानां होमं कुर्याद्यथाविधि । होमशेषं समाप्यैवं ब्रह्माचार्यादिकान् यजेत् । अभिषेकं ततः कुर्युरुभयोर्मंगलं वदेत् । स्वस्तिशब्दं तथा ब्रूयुर्गांच दद्यात्पयस्विनीं । देवान् वह्निं विसृज्याथ कुंभे लक्ष्मीं निधाय च । तं सलक्ष्मीकं कुंभं गृहीत्वेति शेषः । आचार्यब्रह्मऋत्विग्भिर्वाद्यघोषपुरःसरं । स्वगृहं च शनैर्गच्छेत्सार्द्धं तेन प्रवासिना । देवानां चैव तृप्त्यर्थं कर्तव्यं द्विजभोजनं । एवं कृते विधाने तु न स्याद्विघ्नं कदाचन । देवद्विजप्रसादेन कल्याणं स्यान्न संशयः । आयुष्यं क्षेम-मारोग्यं पुत्रपौत्रप्रवर्द्धनं । सौभाग्यमतुलं चैव लभेदस्य प्रसादतः । आरामे पुण्यतीर्थे वा देवागारेऽथ संगमे । सुपवित्र-नदीतीरे विधानं क्षेमदं भवेत् । इति । इति सूर्यारुणसंवादे विशिष्टसगोत्रासगोत्रसपिंडानां द्वादशाब्दादूर्ध्वमवलोकनविधा-नवचनानि ॥ स्वगृहं च शनैर्गच्छेत्सार्द्धं तेन प्रवासिना इति स्वगृहे आगमनानंतरं ततो व्याहृतिभिर्होमं शतमष्टोत्तरं तिलै-रिति स्मृत्यंतरे व्याहृतिभिस्तिलहोमोऽधिकः । स्मृत्यंतरे विशेषांतरं । इत्थं यः कुरुते मर्त्यस्तस्यारिष्टं न विद्यते । आयु-ष्कामो नरश्चैवमकृत्वा नावलोकयेत् । पूर्वं विलोकितानां तु विधिरेष उदाहृतः । नचैवापूर्वदृष्टानामिति प्राहुर्मनीषिण इति । तथा—शिवाग्रे तु समागत्य कृत्वा चैवांतरे पटं । उभाभ्यां नारिकेलं च भंक्त्वेत्यत्र विधानांतरं । पारिजाते । द्वादशाब्दे

व्यतीते तु न कुर्याद्भ्रातृदर्शनं । पित्रोः पुत्रस्य नैवाहुर्महाहानिकरं भवेत् । दर्शनं तु प्रकुर्वीत शिवं पूज्य शिवालये । कांस्यपात्रं स्फोटयित्वा अंतःपटविधानतः । मुखावलोकनं पश्चात्समालिंग्य विपर्ययात् । विपर्ययात् परस्परतः । एवं कृते विधाने तु दोषशांतिर्भविष्यतीति ॥ स्मृत्यंतरेतु । शिवालयेऽथवा तीर्थे स्नात्वा प्रज्वाल्य दीपकौ । शिवं संपूज्य विधिवदुभौ तु देवमध्यतः । धृत्वा कांस्यमयं पात्रं सजलं रत्नपूरितं । शांतिकैर्मंत्रघोषैश्च द्विजैः सह विलोकयेत् । आननं चैकमेकस्य दृष्ट्वा सम्यक् शिवं नमेत् । ब्राह्मणाय यथाशक्त्या दद्यात्पात्रं सदक्षिणं । अन्येभ्यश्चाथ विप्रेभ्यो यथावित्तानुसारतः । तेभ्योऽपि दक्षिणां दत्वा पूजयेच्च पुनः पुनः । नत्वा देवं द्विजान्त्सूर्यमागच्छेत्स्वस्य मंदिरमिति ॥ अथ सामान्यानां सगोत्रासगोत्रसपिंडानां द्वादशाब्दादूर्ध्वमवलोकनविधिः । गर्गसंहितायां शौनकः । देशक्षोभे यदा कश्चित्सपिंडांतर्गतो नरः । विदेशं च गतः स्त्री वा न दृष्टौ द्वादशाब्दकं । तयोः पुनर्दर्शनेन महाविघ्नः प्रजायते । कुलक्षयो भवेत्तत्र नात्र कार्या विचारणा । पुमान्वा वनिता वाऽपि पापराक्षससंज्ञितौ । अतस्तयोर्दर्शने च नाधिकारः परस्परं । विधानं तत्र कर्तव्यं महाविघ्नापनुत्तये । द्वादशाब्दात्परं कंचिद्दर्शनार्थमुपागतं । देवतालयमध्ये तु सम्यक्तमुपवेशयेत् । आहूय ब्राह्मणान्पश्चाच्चतुर्वेदपरायणान् । स्नात्वा तैलेन शुद्धेन पूजयेत्कुलदेवतां । तैलेनेत्यस्य पूजयेदित्यत्रान्वयः । तैलदीपेन पूजयेन्नीराजयेदित्यर्थः । पितॄन्त्संतर्प्य विधिवत्स्वास्तिवाच्य द्विजोत्तमैः । पितॄन् संतर्प्येति आभ्युदयिकं श्राद्धमनूद्यते । जुहुयाद्विधिवद्ब्रह्माविंद्रप्रीत्यै समाहितः । पायसं सर्पिषा युक्तं जुहुयादयुतं सुधीः । त्वादिष्ठयेतिमंत्रेण हवनं पूजनं चरेत् । मूर्तिमिंद्रस्य हेम्नस्तु पीठे

देवतरोः शुभे। देवतरवोऽमरकोशे। पंचैते देवतरवो मंदारः पारिजातकः। संतानः कल्पवृक्षश्च पुंसि वा हरिचंदनमिति। पूजितां विधिवद्भक्त्या आचार्याय निवेदयेत्। अग्रिमवचने "हुते स्विष्टकृते" इत्युक्तेः। स्विष्टकृद्धोमानंतरं निवेदयेदिति अध्याहृतपदेनान्वयः। मूर्तिदानमंत्रः। सहस्राक्ष महाबाहो सर्वविघ्नविनाशन। अनेन मूर्तिदानेन सुप्रीतो भव मे प्रभो। हुते स्विष्टकृते पश्चात् गां प्रदद्यात्पयस्विनीं। पश्चादिंद्रमूर्तिदानानंतरं। तैलं दद्याद्द्विजातिभ्यो विघ्ननाशाय भूरिशः। उभयोस्त्वायसीं मूर्तिं पलैस्तु दशभिः पृथक्। तैलाभ्यक्तां ततो दद्यात् ब्राह्मणाय सदक्षिणां। स्वीयामायसीं संपूजितां तैलाभ्यक्तां प्रतिमां स्वगृहे ब्राह्मणाय दद्यात्। आगतस्य तु देवालये दर्शनानंतरं तद्धस्तेन दापयेदिति विवेकः। इति कृत्वा विधिं पश्चान्महादेवालयं व्रजेत्। तत्र पूजा प्रकर्तव्या षोडशैरुपचारकैः। प्रदक्षिणां नमस्कारं कृत्वा देवं तु प्रार्थयेत्। मम वंशोद्भवो ह्येष द्वादशाब्दं न वीक्षितः। पापराक्षससंज्ञोऽयं त्वद्दर्शनमुपागतः। इदानीं कृपया देव दर्शनेनास्य संभवं। महाविघ्नं हर विभो कुलक्षयकरं परं। देवस्याग्रे ततः स्थित्वा उभाभ्यां मध्यतो न्यसेत्। महाफलं ततो पृष्ठदेशतो विक्षिपेन्मिथः। तत्फलस्य विघातं तु अन्यहस्तेन कारयेत्। ततो विप्राय वै दद्यात्कांस्यपात्रं घृतान्वितं। ततः पुण्यस्त्रियो विप्रा वृद्धाश्च गुरवस्तथा। विप्रा वृद्धा गुरव इति पुण्यस्त्रीविशेषणानि। विप्रा ब्राह्मणजातीयाः। गुरवः श्रेष्ठाः। नीराजनं पृथक्कुर्युस्तयोर्विघ्नोपशांतये। ततोऽभिषेचनं कुर्युर्ब्राह्मणा मंत्रवित्तमाः। वृद्धान्प्रणमतोस्तत्र दद्युराशीर्वचो द्विजाः। ज्ञातिभिः सह संगम्य ततो गृहमनुव्रजेत्। ब्राह्मणान् भोजयेत्पश्चाच्छतं वा शक्त्यपेक्षया। एवं कृते विधाने च विघ्नः कोऽपि न

जायत इति ॥ इति सामान्यानां सगोत्रासगोत्रसापिंडानां गर्गसंहितोद्धृतः शौनकोक्तो द्वादशाब्दादूर्ध्वमवलोकनविधिः ॥

श्रीः ॥ अथ प्रवासादिना दूरदेशं गतानां द्वादशाब्दादूर्ध्वं समागतानां अपूर्वदृष्टानां विशिष्टसगोत्रासगोत्रसापिंडानां परस्परमवलोकनप्रयोगः ॥ तेच सगोत्रासगोत्रसापिंडा विशिष्टा विविच्यंते । जायापती मातृपुत्रौ पितृपुत्रौ बंधुबंधू पितृव्यतद्भ्रातृपुत्रौ त्रिवर्षोर्ध्वं विवाहात्प्राक् मातृकन्ये पितृकन्ये स्वसृस्वसारौ च । इति सगोत्रसापिंडाः । विवाहिते स्वसृस्वसारौ मातुलभागिनेयकौ दौहित्रमातामहौ दौहित्रमातामह्यौ दौहित्रीमातामहौ दौहित्रीमातामह्यौ भ्रातृविवाहितभगिन्यौ च । इति असगोत्रसापिंडाः । एतेषामपूर्वदृष्टानामेवायं विधिः । स पूर्वदृष्टानां तु न भवति । द्वादशाब्दात्परं कंचिद्दर्शनार्थमुपागतं । देवतालयमध्ये तु सम्यक् तमुपवेशयेत् इति शौनकोक्तेर्देवालये तमुपवेशयेत् ॥ ततः । इदं विधानं आरामे पुण्यतीर्थे देवागारे संगमे सुपवित्रनदीतीरे वा अनुष्ठेयं । आरामादावनुष्ठितं चेत् शुभदं ॥ ॥ अथ प्रयोगः ॥ आच० । प्राणा० । पवित्रधा० । शांतिसूक्तपा० । देशकालसं० । संकल्पः । मम मातुः पितुः भ्रातुः वा इत्येवं तत्तन्नामोल्लिख्य वियोगकृदघोरसंज्ञक पापग्रहकृत द्वादशाब्दाधिक प्रवासस्थितिस्वरूपपीडापरिहारार्थं अस्मदादि तदीयसकलकुटुंबानां क्षेमायुरारोग्यैश्वर्यपुत्रपौत्रादिसंतत्यभिवृद्धिपूर्वकं सर्वत्राभ्युदयार्थं अघोरग्रहप्रीतिप्रदां सूर्यारुणसंवादोक्तां अघोरग्रहशांतिं करिष्ये । इति संकल्पः । गणपतिपूजनादि नांदीश्राद्धांतं । आचार्यादिकृत्विग्वरणं । दिग्रक्षणादि अग्निस्थापनांतं । अग्नेः प्राच्यां पीठे ॐमहीद्यौरित्यादि=प्रसन्नो भव सर्वदेत्यंतं उदक्संस्थं पंचकलशप्रतिष्ठापनं । ततः पंचप्रतिमासु अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकमुदक्

संस्थमेकैकस्यां प्रतिमायां तत्तन्मंत्रैस्तत्तद्देवतां क्रमेणावाहयेत् । ॐगणानांत्वागणपतिꣳहवामहे० वसोमम ॥ १ ॥ इति यजुर्मंत्रेण ॐगणपतये नमः गणपतिमावा० ॥ १ ॥ ॐत्र्यंबकंयजामहे० माऽमृतात् ॥ २ ॥ इति मंत्रेण ॐमृत्युंजयाय नमः मृत्युंजयमावा० ॥ २ ॥ ॐइदंविष्णुर्विचक्रमे० सुरे ॥ ३ ॥ ॐविष्णवे नमः विष्णुमावा० ॥ ३ ॥ ॐ श्रीश्चते-लक्ष्मीश्च० मऽइषाण ॥ ४ ॥ इति मंत्रेण । ॐलक्ष्म्यै नमः लक्ष्मीमावा० ॥ ४ ॥ ॐयातेरुद्रशिवातनूरघोरा० भिचाकशीहि ॥ ५ ॥ ॐ अघोरनाम्ने ग्रहाय नमः अघोरनामानं ग्रहमावा० ॥ ५ ॥ इत्यावाह्य कलशेषु प्रतिष्ठापनपूर्वकमासनादिषोडशोपचारैः पूजयेत् । ततोऽग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि=आज्यभागांतं । द्रव्यत्यागः । प्रधानहोमः । क्रमेण प्रतिदैवतमेकैकं होम्यं । दूर्वाः १ तिलाः २ आज्यं ३ चरुः ४ शर्करा ५ इति । प्रतिदैवतमाहुतिसंख्या । अष्टोत्तरसहस्रं १००८। अष्टोत्तरशतं वा १०८। अष्टाविंशतिः वा २८। इति होमसंख्यापक्षांतरं । होममंत्राः प्रागुक्ता एव ॥ प्रधानहोमांते । पूजासामग्रीं गृहीत्वा शिवालयं गच्छेत् । रुद्ररुद्रीलघुरुद्राद्यभिषेकपूर्वकं सांबसदाशिवं षोडशोपचारैः संपूजयेत् । ततः स्वस्तिनोमिमीता० १ आनोभद्रा० २ कनिक्रदत्० ३ प्रदक्षिणिदभिगृणांति० ४ भद्रंवद० ५ इति पंच सूक्तानि पठेत् ॥ स्वस्तिन इति पंचानां स्वस्त्यात्रेयो विश्वेदेवास्त्रिष्टुप् अंत्ये द्वे अनुष्टुभौ जपे विनियोगः ॥ ॐस्वस्तिनोमिमीतामश्विनाभगः स्वस्तिदेव्यादितिरनर्वणः ॥ स्वस्तिपूषाअसुरोदधातुनः स्वस्तिद्यावापृथिवीसुचेतुना ॥ १ ॥ स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः ॥ २ ॥ विश्वेदेवानोअद्यास्वस्त-

येवैश्वानरोवसुरग्निःस्वस्तये ॥ देवाअवंत्वृभवःस्वस्तयेस्वस्तिनोरुद्रःपात्वंहसः ॥ ३ ॥ स्वस्तिमित्रावरुणास्वस्तिपथ्येरेवति ॥
स्वस्तिनइंद्रश्चाग्निश्चस्वस्तिनोअदितेकृधि ॥ ४ ॥ स्वस्तिपंथामनुचरेमसूर्याचंद्रमसाविव ॥ पुनर्ददताघ्नताजानतासंगमेमहि ॥५॥
इति पंचर्चं स्वस्तिनोमिमीतां इति सूक्तं ॥ तत आनोभद्रा दशर्चं सूक्तं । तत्र कात्यायनसर्वानुक्रमणिका । "आनो दशर्चं
जागतं वैश्वदेवं गोतमः स्वस्तिनो विराट्स्थाना भद्रंकर्णेभिस्तृचं त्रैष्टुभमिति" ॥ ॐ आनोभद्राः क्रतवो० मदितिर्ज्जनि-
त्वमित्यंतं ॥ १० ॥ वा० सं० अ० २५।१४=२३=॥ ततः कनिक्रददिति सूक्तं । कनिक्रददितितृचस्य गृत्समदः शकुंत
इंद्रस्त्रिष्टुप् ज० । ॐ कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावं ॥ सुमंगलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत्
॥ १ ॥ मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोऽअस्ता ॥ पित्र्यामनुप्रदिशंकनिक्रदत्सुमंगलोभद्रवादीवदेह ॥२॥
अवक्रंददक्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते ॥ मानस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥३॥ इति त्र्यर्चं कनिक्र-
ददिति सूक्तं । ततः प्रदक्षिणीति सूक्तं । प्रदक्षिणिदभीतितृचस्य गृत्समदः शकुंतो जगती द्वितीया शक्वर्यष्टिर्वा । ॐ प्रद-
क्षिणिदभिगृणंतिकारवोवयोवदंतऋतुथाशकुंतयः ॥ उभेवाचौवदतिसामगाइवगायत्रंचत्रैष्टुभंचानुराजसि ॥ १ ॥ उद्गातेव
शकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमा-
वद ॥ २ ॥ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराः
॥ ३ ॥ इतित्र्यर्चं प्रदक्षिणीतिसूक्तं ॥ ततो भद्रंवदेति पंचर्चं सूक्तं । ॐ भद्रंवददक्षिणतोभद्रमुत्तरतोवद ॥ भद्रंपुरस्ता-

न्नोवदभद्रंपश्चात्कपिंजर ॥ १ ॥ भद्रंवदपुत्रैर्भद्रंवदगृहेषुच ॥ भद्रमस्माकंनोवदभद्रंनोअभयंकृधि ॥ २ ॥ भद्रमधस्तान्नोवदभद्रमुपरिष्टान्नोवद ॥ भद्रंभद्रंनआभरभद्रंनःसर्वतोवद ॥ ३ ॥ असपत्नंपुरस्तान्नःशिवंदक्षिणतस्कृधि ॥ अभयंसततंपश्चाद्भद्रमुत्तरतोगृहे ॥ ४ ॥ यौवनानिमहयसिजिग्युषामिवदुंदुभिः ॥ शकुंतकप्रदक्षिणंशतपत्राभिनोवद ॥ ५ ॥ इति पंचर्चं भद्रं वदेति सूक्तं। सूक्तपाठांते उभयोः शिवस्योपरि पुष्पांजलिदानं। तत उभयोर्मध्ये अंतरपटं धारयेयुः। ततः। उभाभ्यामपि शिवस्य पुरतो नारिकेलफलं प्रत्येकं स्फोटनीयं॥ अथवा। उभाभ्यामपि कांस्यपात्रं प्रत्येकं स्फोटनीयं॥ अथवा। उभाभ्यामपि शिवस्य पुरतो महांतौ घृतदीपौ प्रज्वाल्य कांस्यपात्रे जलं पूरयित्वा तन्मध्ये पंचरत्नानि निक्षिप्य। विप्रपठितशांतिघोषपूर्वकं उभाभ्यामपि परस्परं तत्र मुखमवलोकनीयं। मुखावलोकनानंतरं सांबसदाशिवं प्रणमेतां। पुनः शिवं गंधादिपंचोपचारैः संपूज्य तत्कांस्यपात्रं सदक्षिणं विप्रपूजनपूर्वकं ब्राह्मणाय दद्यात्। भूयसीं च विप्रेभ्यो दद्यात्॥ ततः प्रत्यक्षं परस्परं मुखमवलोकयेत्। ततो यथाधिकारं परस्परं प्रणमेत्। समालिंगयेत्। स्वागतं कुर्यात्। उपविश्य क्षेमकुशलादि पृच्छेत्। ततः शिवं साष्टांगं प्रणम्य। द्विजैः सह होमदेशं उभावपि गच्छेतां। तदवसरे ब्राह्मणाः ॐआनोभद्राःक्रतवो० आयुष्यं वर्चस्यमित्यादि स्वस्तिकसूक्तानि पठंतो गच्छेयुः। होमदेशं समागत्य। अग्नेः पश्चादुपविश्य। आचम्य। पूजा स्विष्टं नवाहुत्यः। प्रधानदेवताभ्यो होमशेषचरुणा सदीपं तत्तन्मंत्रैर्बलिदानं पूर्णाहुतिर्वसोर्द्धाराच। श्रेयःसंपाद्य दानं। आचार्यपूजनं ॥ तत अघोरप्रतिमां गंधादि पंचोपचारैः संपूज्य। अघोरं ग्रहं प्रार्थयेत्। ॐ अघोर त्वं महाकाय नृणां विश्लेषकारक। त्वत्क्षो-

भजनितं घोरं नृणां विश्लेषजं फलं । वियोगविषमाक्षस्त्वं विषमांघ्रिकरायुध । विबुद्धिर्विगतस्थायी विलापी विगताश्रयः । योगभ्रष्टो योगध्वंसी यागियोगविघातकः । नृनार्योर्योगहंता च बंधुबंधुवियोगकृत् । गच्छत्यनुदिनं चोर्वी प्राणिनां क्लेश-हेतवे । योगविश्लेषकारित्वाद्वियोगं त्वां प्रचक्षते । भावियोग महाघोर प्राणिनां क्लेशदायक । शरणागतमापन्नं त्राहि मां शोकसागरात् । इति ॥ ततो ब्राह्मणं संपूज्य । संपूजिताय तस्मै ब्राह्मणाय तां अघोरप्रतिमां सकलशां सवस्त्रां सोपस्करां सदक्षिणां दद्यात् । पुनरघोरं संप्रार्थयेत् । ॐसातेंरुद्रशिवातनूरघोरा० भिचाकशीहि ॥ १ ॥ अनेन सह गच्छ त्वं क्रीडस्व च सुखं चिरं ॥ मां तथैवाधुना मुंच क्षमां कुरु ममोपरि ॥ १ ॥ तत अघोरप्रतिमाग्राहिणं प्रतिब्रूयात् । भो अघोर इतोभिगम्यतामभिगम्यतां इति। इत्युक्त्वा निवर्तध्वमिति सूक्तं जपेत् । निवर्तध्वं मथितऋषिर्भृगुर्वा च्यवनो वा आपो देवता वा अग्नीषोमा अर्द्धर्चौ अग्नीषोमौ देवते अनुष्टुप् आनिवर्तगायत्री ऐंद्री वा ॥ ॐ निवर्तध्वंमानुगातास्मान्त्सिषक्तरेवतीः ॥ अग्नीषोमापुनर्वसूअस्मेधारयतंरयिं ॥ १ ॥ पुनरेनानिवर्तयपुनरेनान्याकुरु ॥ इंद्रएनानियच्छत्वग्निरेनाउपाजंतु ॥२॥ पुनरेतानिवर्ततामस्मिन्पुष्यंतुगोपतौ ॥ इहैवाग्नेनिधारयेहतिष्ठतुयारयिः ॥ ३ ॥ यंनियानंन्ययनंसंज्ञानंयत्परायणं ॥ आवर्तनंनिवर्तनंयोगोपाअपितंहुवे ॥ ४ ॥ यउदानड्व्ययनंयउदानट्परायणं ॥ आवर्तनंनिवर्तनमपिगोपानिवर्ततां ॥ ५ ॥ आनिवर्तनिवर्तयपुनर्नइंद्रगादेहि ॥ जीवाभिर्भुनजामहै ॥ परिवोविश्वतोदधऊर्जाघृतेनपयसा ॥ येदेवाःकेचयज्ञियास्तेरय्यासंसृजंतुनः ॥ आनिवर्तनिवर्तयनिनिवर्तनिवर्तय ॥ भूम्याश्चतस्रःप्रदिशस्ताभ्यएनानिवर्तय ॥ ६ ॥ इति निवर्तध्वमिति सूक्तं । आ० सं०

अ० ५५।१। पुनस्तं च कदाचन नैव पश्येत् । इतिसूक्तमुक्त्वा तत उभाभ्यां नारिकेलं भङ्क्त्वा अघोरद्विजपुंगवं अभिगम्यतासिति भूयः पुनःपुनः उक्त्वा तं विसर्जयेत् । पुनस्तं कदाचन नैव पश्येदित्यन्वयः । ततः कांस्यपात्रे आज्यावेक्षणं सदक्षिणं तद्दानं च । सप्तधान्यदानानि । अभिषेकः । लक्ष्मीं विना विसर्जनं । यस्य स्मृत्येत्यादि ॥ ततः सकलशां सवस्त्रां सोपस्करां लक्ष्मीप्रतिमां करयोर्गृहीत्वा मंगलवाद्यघोषपुरःसरं ब्राह्मणैः प्रवासिना च सह स्वगृहं प्रविशेत् ॥ गृहप्रवेशोत्तरं तं सलक्ष्मीकं कलशं पीठे अष्टदलोपरि निधाय तदग्रे स्थंडिलं कुर्यात् ॥ आचम्येत्यादि । संकल्पः । सर्वारिष्टविनाशार्थं सलक्ष्मीकाभ्युदयार्थं च महाव्याहृतिहोमं करिष्ये । स्थंडिले भूसंस्कारपूर्वकं अग्निं प्रतिष्ठाप्य । दक्षिणतो ब्रह्मासनास्तरणादि आज्यभागांतं । ॐभूर्भुवःस्वःस्वाहा । इति मंत्रेण अष्टोत्तरं शतं तिलैर्होमः । ॐ इदं प्रजापतये न ममेति त्यागः । स्विष्टकृन्नवाहुतयश्च । अग्निविसर्जनं । स्वस्ति भवंतो ब्रुवंतु । इति ब्राह्मणान् ब्रूयात् । अस्तु स्वस्ति इति ब्राह्मणाः प्रतिब्रूयुः । लक्ष्मीं विसृज्य तां प्रतिमां सकलशां सवस्त्रां सोपस्करां सदक्षिणां आचार्याय दद्यात् । व्याहृतिहोमस्य यस्य स्मृत्येत्यादिसमापनं । ब्राह्मणभोजनं । आशीर्ग्रहणंच ॥ इति शुक्लयजुःशा० कांडे जननशांतिककांडप्रदीपे सूर्यारुणसंवादोक्तो अपूर्वदृष्टानां द्वादशाब्दादूर्ध्वं देशांतरादागतानां विशिष्टसगोत्रासगोत्रासपिंडानां द्वादशाब्दादूर्ध्वमवलोकनविधिः । अघोरग्रहशांतिर्वा परिसमाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

श्रीः ॥ अथ गर्गसंहितायां शौनकोक्तः सामान्यानां अदृष्टपूर्वाणां सगोत्रासगोत्रसपिंडानां द्वादशाब्दादूर्ध्वं देशांतरादा-

गतानां द्वादशाब्दादूर्ध्वमवलोकनविधिप्रयोगः । ऐंद्रीशांतिर्वैति नामांतरं । समागतं तं देवालये उपवेशयेत् । आच० । प्राणा० । पवित्र० । शांतिसू० । देशकालसं० । संकल्पः । मम अमुकशर्मणोऽस्य सपिंडस्य विदेशगमनादिना द्वादशाब्दोर्ध्वमनवलोकनेन जन्यमान कुलक्षयादि महाविघ्नापनुत्तये पुत्रपौत्रादिकुलाभिवृद्धये अस्य पापराक्षसस्य मुखावलोकने अधिकारसंपत्त्यर्थं च इंद्रप्रीतिप्रदां शौनकोक्तां ऐंद्रीं शांतिं करिष्ये । इति संकल्प्य । गणपतिपूजादि अग्निप्रतिष्ठांतं ॥ ततः स्वकुलदेवतायाः षोडशोपचारैः पूजनं । तदग्रे तिलतैलेन ज्वलंतं दीपं प्रदीपयेत् । ततोऽग्नेः प्राच्यां मंदारपारिजाताद्यन्यतरदेवतरुपीठे अष्टदले ॐ मुहीद्यौः पृथिवीचनइत्यादि=प्रसन्नो भव सर्वदेत्यंतं कलशप्रतिष्ठापनं । अग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं ऐंद्रीं सौवर्णीं प्रतिमां पूर्णपात्रे षोडशोपचारैः संपूजयेत् । पूजने हवने च मंत्रः । ॐ स्वादिष्ठया मदिष्ठयापवस्वसोमधारया ॥ इन्द्रायपातवेसुतः ॥ १ ॥ वा० सं० २६।२५ ॥ ततो दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि आज्यभागांतं । तत्र सक्षीरप्रणीताप्रणयनं । पयसि पायसश्रपणंचेति विशेषः । आज्यभागांते प्रधानहोमः । मंत्रः प्रागुक्त एव । हौम्यं घृताक्तं पायसं । होमसंख्या अयुतं दशसहस्रं १००००। ॐ इदमिंद्रायेति त्यागः । प्रधानहोमांते । पूजा स्विष्टं नवाहुत्यः । होमावशिष्टपायसेनेंद्राय बलिदानं । पूर्णाहुतिर्वसोर्द्धाराहोमश्च । श्रेयःसंपाद्य दानं । आचार्यपूजनं । तत आचार्याय सदक्षिणं ऐंद्रमूर्तिदानं । मूर्तिदानमंत्रः । ॐ सहस्राक्ष महाबाहो सर्वविघ्नविनाशन । अनेन मूर्तिदानेन सुप्रीतो भव मे प्रभो ॥ १ ॥ इति । तत आचार्याय पयस्विनीगोदानं । तत अनेकेभ्यो ब्राह्मणेभ्यः सदक्षिणं भूरि-

तैलदानं ॥ ततः कर्त्री स्वीयां पलमितां आयसीं मूर्तिं प्रतिकृतिं पुत्तलिकामितियावत्। कृत्वा। तां तैलाभ्यक्तां च कृत्वा वस्त्रालंकारैर्भूषयित्वा चंदनपुष्पमालादिभिरलंकृत्य गंधाद्युपचारैः संपूज्य ब्राह्मणाय पूजनपूर्वकं तां प्रतिकृतिं सदक्षिणां दद्यात्। कुलक्षयादि महाविघ्नोपशांत्यर्थं इमां स्वीयां आयसीं प्रतिकृतिं अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे। प्रतिगृह्यतां। इत्युक्त्वा तद्धस्ते दद्यात्। सः ॐदेवस्यत्वास० हस्ताभ्यां इति मंत्रमुच्चार्य। प्रतिगृह्णामीति वदेत्। कर्ता तद्धस्ते जलं निक्षिपेत्। दानसांगतासिद्ध्यर्थं तस्मै दक्षिणादानं च। तद्विसर्जनं। ततः पाणिपादप्रक्षालनं। आचमनं॥ ततः पूजासामग्रीं गृहीत्वा। शिवालयं व्रजेत्। तत्र षोडशोपचारैः रुद्राभिषेकपूर्वकं सांबसदाशिवं संपूजयेत्॥ शिवं प्रदक्षिणीकृत्य। साष्टांगं प्रणिपत्य प्रार्थयेत्। ॐमम वंशोद्भवो ह्येष द्वादशाब्दं न वीक्षितः। पापराक्षससंज्ञोऽयं त्वद्दर्शनमुपागतः। इदानीं कृपया देव दर्शनेनास्य संभवं। महाविघ्नं हर विभो कुलक्षयकरं परं॥ २॥ इति प्रार्थना॥ ततः समागतकर्तारौ उभावपि देवस्याग्रे अन्योन्याभिमुखौ तिष्ठतः। ततस्तयोर्मध्ये अन्येन केनचित् नारिकेलकूष्मांडादि महाफलं विन्यस्येत्। तत स्तत्फलं परस्परं परस्परपृष्ठतः प्रक्षिपेतां। तत इतरहस्तेन तत्फलं स्फोटयेत्। अथ तत्फलं उदीच्यां ईशान्यां वा अन्यहस्तेनैव निरस्येत। ततः कांस्यपात्रे विलीनमाज्यं निक्षिप्य। तत्रोभाभ्यां परस्परं मुखमवलोकनीयं। ततः कर्ता तत्पात्रं सदक्षिणं विप्राय दद्यात्। ततो वृद्धाः श्रेष्ठाः ब्राह्मण्यः पुण्यस्त्रियस्तौ, पृथक् पृथक् नीराजयेयुः। पश्चात्तौ मंत्रविदो ब्राह्मणा वैदिकमंत्रैः शिवतीर्थोदकेनाभिषिंचेयुः। ततस्तौ वृद्धान्प्रणमतः। ब्राह्मणाश्च ताभ्यामाशिषो दद्युः। तत उभाव-

पि परस्परं संगम्य ज्ञातिभिः सह मंगलवाद्यघोषपुरःसरं स्वगृहमनुव्रजेतां । स्वगृहे कर्मभूमौ आसने कर्ता उपविशेत् । तत ऐंद्रोदकेन विप्रास्तमभिषिंचेयुः । देवताभ्योर्विसर्जनं । यस्य स्मृत्येत्यादि समाप्तिः । ब्राह्मणभोजनं ॥ एवं कृते विधाने च विघ्नः कोऽपि न जायत इति॥ इति शुक्ल० प्रदीपे जननशांतिककांडे गर्गसंहितोद्धृतः शौनकोक्तः सामान्यानां सगोत्रास-गोत्रसपिंडानां द्वादशाब्दादूर्ध्वं देशांतरादागतानां द्वादशाब्दादूर्ध्वमवलोकनविधिप्रयोगः समाप्तः ॥

श्रीः ॥ प्रपौत्रमुखावलोकनविधिः ॥ अथप्रपौत्रमुखावलोकनविधिः॥ वसिष्ठः । पुत्रेण लोकाञ्जयते पौत्रेणानंत्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमिति । ब्रध्नः सूर्यः । विष्टपो लोकः । याज्ञवल्क्योऽपि । लोकाऽऽनंत्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैरिति ॥ अथ शिष्टाचाराऽनुगुणाभियुक्तवचनानि ॥ धर्मशास्त्रसंग्रहे ॥ प्रपौत्रवदनं दृष्ट्वा आचंद्रार्कं दिवं वसेत् । इत्याह भगवान् कृष्णः पांडवानां पितामहं ॥ १ ॥ तस्मात्प्रपौत्रे उत्पन्ने स्वस्तिवाचनपूर्वकं । शांतिसूक्तजपं कृत्वा वाद्यघोषपुरःसरं ॥ २ ॥ पुरतश्चोक्तमंत्रेण पश्येत्तद्वदनं ततः । शिशोः पितामहो भक्त्या पितरौ स्वौ प्रपूज्य च ॥ ३ ॥ स्वर्णपुष्पाणि चादाय संन्यसेन्मूर्ध्नि वै तयोः । सदक्षिणानि पुष्पाणि गुरवे चार्पयेत्ततः ॥ ४ ॥ ब्राह्मणान्पूजये-द्भक्त्या दक्षिणाभोजनादिभिः । एवं यः कुरुते मर्त्यस्तस्य वंशो विवर्धते ॥ ५ ॥ लक्ष्मीनारायणः प्रीत्या तद्गेहे सर्वदा वसेत् । प्रपौत्रवदनं दृष्ट्वा संतुष्टौ पितरौ मया ॥ ६ ॥ पूजितौ स्वर्णपुष्पैस्तत्प्रीतो नारायणोऽभवदिति ॥ ७ ॥ पुरतश्चोक्तो

मुखावलोकनमंत्रः । प्रपौत्रवदनं दृष्ट्वा संतुष्टौ पितरौ मया । पूजितौ स्वर्णपुष्पैस्तत्प्रीतो नारायणोऽभवदिति ॥ १७ ॥छ॥
इति शुक्लय० प्रदीपे जननशांतिककांडे प्रपौत्रमुखावलोकनविधिः समाप्तः ॥

श्रीः ॥ याज्ञवल्क्योक्तः केवलो ग्रहयज्ञः ॥ अथ याज्ञवल्क्योक्तः केवलो ग्रहयज्ञः ॥ याज्ञवल्क्यस्मृतिः । आचाराध्याये ग्रहशांतिप्रकरणे । श्लोकाः ।२९३=३०८॥ एवं विनायकं पूज्य ग्रहांश्चैव विधानतः । कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमां । आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा । महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् । श्रीकामः शांतिकामो वा ग्रहयज्ञं समाचरेत् । वृष्ट्यायुःपुष्टिकामो वा तथैवाऽभिचरन्नपि । इति । कर्मणामविघ्नेन फलसिद्धिः श्रीः । शांतिरापदुपशांतिः वृष्टिः सस्यादिवृद्ध्यर्थं प्रवर्षणं आयुरपमृत्युजयेन दीर्घकालजीवनं पुष्टिरनवद्यशरीरत्वं अभिचारः अदृष्टोपायेनपरपीडा इति ग्रहशांतिकफलं॥ग्रहशांतेरावश्यकत्वं। ग्रहाधीना नरेंद्राणा (ग्रहाधीनाथ चान्येषां इत्यपि पाठांतरं) मुच्छ्रायाः पतनानि च । भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः॥नरेंद्रा अभिषिक्तक्षत्रिया राजान इत्यर्थः। अन्येषां द्विजादीनामपि। ग्रहाः पूज्यतमाः । अत्यंतातिशयेन पूज्याः । उभयत्र हेतुः । प्राणिनां अभ्युदया विनिपाताश्च भावाभावौ उत्पत्तिनिरोधौ च ग्रहाधीनाः । तस्माद्धेतोः पूज्यतमा इति ॥ नामतो ग्रहाः ॥ सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥ ९ ॥ अग्निप्रणयनं कृत्वा वेद्यामावाहयेत्सुरानिति ग्रहयज्ञप्रकरणे वासिष्ठान्मात्स्याच्च आदावग्निप्रतिष्ठापनं । ततो ग्रहप्रतिष्ठापनं । अत्र ग्रहाणां प्राधान्यात् प्रधानदेवतोपलक्षणत्वं । शांतिकपौष्टिकादिसर्वकर्मणां

ग्रहयज्ञविकृतित्वेन सर्वकर्मसु आदावग्निप्रणयनं । ततःप्रधानदेवताधिवासनं । ततोग्रहप्र० । ग्रहाणां पूजाधिष्ठानानि ॥ ताम्रकात्स्फटिकाद्रक्तचंदनात्स्वर्णकादुभौ । राजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् । स्ववर्णैर्वा पटे लेख्या गंधैर्मंडलकेषु वा । ग्रहप्रतिमालक्षणानि । तत्रैव मिताक्षरायां मात्स्योक्तानि ॥ तानि यथा ॥ पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः। सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा रविः ॥१॥ श्वेतः श्वेतांबरधरो दशाश्वः श्वेतभूषणः। गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥ २ ॥ रक्तमाल्यांबरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ ३ ॥ पीतमाल्यांबरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥ ४ ॥ कर्णिकारः=( महाराष्ट्रभाषायां=पांगारा= इत्युच्यते ) तथाचामरः । चाथ द्रुमोत्पलः । कर्णिकारः परिव्याध इति ॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दंडिनौ वरदौ कार्यौ साक्षसूत्रकमंडलू ॥ ५ ॥ ६ ॥ उभयोर्वस्त्रवर्णविशेषः । तदितरत्समं । इंद्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥ ७ ॥ करालवदनः खड्गचर्मशूली वरप्रदः । नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते ॥ ८ ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥ ९ ॥ सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः । स्वांगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा । इति ॥ प्रतिमानां उच्छ्रायः शतमष्टोत्तरं स्वांगुलमितः॥ १०८ ॥ सार्द्धचतुर्हस्त इत्यर्थः ॥ एतेषां स्थापनदेशोऽपि मात्स्ये ॥ मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु । उत्तरेण गुरुं विद्याद्बुधं पूर्वोत्तरेण तु। पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके। पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे। पश्चि-

मोत्तरतः केतुं स्थाप्या वै शुक्लतंडुलैरिति॥ मंडलकाकृतयः स्कांदे॥ वृत्तमंडलमादित्ये चतुरस्रं निशाकरे। महीपुत्रे त्रिकोणं तु बुधे वै बाणसन्निभं। गुरौ तु पट्टिशाकारं पंचकोणं तु भार्गवे। धनुर्निभं शनौ ज्ञेयं शूर्पाकारं तु राहवे। केतूनां तु ध्वजाकारं मंडलानि प्रकल्पयेदिति ॥ मंडलमानानि तु श्रीक्षेत्रनासिकवासिदेवधर्माधिकारीत्युपनामकाग्निहोत्रिआपदेवविरचितखेटपीठमालायां द्रष्टव्यानि ॥ तथा। आदित्याभिमुखाः सर्व इति मात्स्यात्। शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ। प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः। इति स्कांदस्य=प्राङ्मुखौ ऊर्ध्वदृष्टी। उदङ्मुखौ वामदृष्टी। प्रत्यङ्मुखावधोदृष्टी। दक्षिणतोमुखा दक्षिणदृष्टयः। इति उभयसमन्वयेन शक्यार्थमाह हेमाद्रिः। ततश्च सर्वे ग्रहा आदित्याभिमुखा एवेति राद्धांतः। विकल्पोऽस्तीति न भ्रमितव्यं। प्रतिमापटमंडलानां विकल्पो वचनादेव॥ अथ प्रत्येकं पूजोपचाराः॥ यथावर्णं प्रदेयानि वासांसि कुसुमानि च। गंधाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः। वासांसि कुसुमानि गंधाः बलयो नैवेद्यानि च यथावर्णं प्रदेयानि। धूपस्तु सर्वेभ्यो गुग्गुलुरेक एव॥ अग्निकृत्यमाह। कर्तव्या मंत्रवंतश्च चरवः प्रतिदैवतं। अतो न सिद्धचरूपादानं। प्रतिदैवतं पृथक् पृथक् चरुश्रपणं च। मंत्रवत्पदेन दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि होमेतिकर्तव्यताबोधः। होमेतिकर्तव्यतायां समंत्रकता तु अन्यशाखीयपरा। कातीयानां तत्र तन्निवृत्तेः। होमक्रमस्तु= आज्यभागांते वक्ष्यमाणार्कादिसमिद्धोमानंतरं चरुहोमः। अस्मिन्वचसि चरूत्पत्त्युपदेशेन प्रथमं तद्धोमानुक्तेः॥ ग्रहमंत्राः। आकृष्णेन इमंदेवा अग्निर्मूर्द्धादिवःककुत्। उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः। बृहस्पतेअतियदर्य-

स्तथैवान्नात्परिस्रुतः । शन्नोदेवीस्तथाकांडात्केतुंकृण्वन्निमांस्तथा । इति ॥ प्रतिग्रहं पृथक् पृथक् समिधः । अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः । औदुंबरः शमी दूर्वाः कुशाश्च समिधः क्रमात् । इति ॥ प्रतिद्रव्यं होमसंख्या । एकैकस्यात्राष्टशतमष्टाविंशतिरेव वा । होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः । इति ॥ अथ ब्राह्मणभोजनानि । गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकं । दध्यौदनं हविश्चूर्णं मांसं चित्रान्नमेव च । दद्याद्ग्रहक्रमादेवं द्विजेभ्यो भोजनं बुधः । शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकं । इति । क्षीरषाष्टिकं क्षीरमिश्रः षाष्टिकौदनः । षाष्टिकाः षष्टिरात्रेण पच्यमाना व्रीहितंडुलाः । हविर्घृतौदनः । चूर्णं तिलचूर्णमिश्रओदनः कृसरः । तथाचोक्तं । भारते सभापर्वणि । अध्या० ४।२। नैलकंठ्यां टीकायां । ओदनस्तिलमिश्रस्तु कृसरः परिकीर्तितः । तिलकल्कान्विनिक्षिप्य श्रितो वा कृसरो भवेदिति गृह्यविदः । इति । अथ ब्राह्मणानां भोजनर्धिकरा दक्षिणाः, ॥ धेनुः शंखस्तथाऽनड्वान् हेम वासो हयः क्रमात् । कृष्णागौरायसं च्छाग एता वै दक्षिणाः स्मृताः । इति । धेनुर्दोग्ध्री । "दोग्ध्रीधेनु"रिति वा० सं० । अ० २२।२२। अनड्वान् भारसहो बलीवर्दः । वासः पीतं । हयः पांडुरः । आयसं शस्त्रादि । एतच्च संभवे सति । असंभवे तु यथालाभं शक्तितो अन्यदेव यत्किंचिद्देयमिति मिताक्षरा ॥ एवमविशेषेण नवग्रहसमुदितं ग्रहयज्ञमुक्त्वा अनिष्टैकैकग्रहयज्ञमप्याह । यस्य यश्च यदा दुःस्थः स तं यत्नेन पूजयेत् । ब्रह्मणैषां वरो दत्तो पूजिताः पूजयिष्यथेति । दुःस्थः अष्टमादिदुष्टस्थानस्थितः । यत्नेन विशेषेण । "पूजिताः पूजयिष्यथे" त्यत्र पूजयितारमिति कर्माध्याहारः । पूजिताः संतो यूयं इष्टप्रापणेन अनिष्टनिरसनेन

च पूजयितारं पूजयिष्यथेति एषां ग्रहाणां पूर्वं वरो दत्तः । अतः पूजयेदित्यर्थः । होमार्थं तत्तन्मंडलाकृति कुंडं स्थंडिलं वेति विकल्पः । तत्तत्प्रमाणं तु= निर्णयसिंधुटीकायां रांगनाथ्यां लघुखेटपीठमालायां कुंडरत्नावल्यां चालोच्यं ॥ इति याज्ञवल्क्योक्तानि केवलग्रहशांतिकवचांसि ॥ श्रीः ॥ अथ याज्ञवल्क्योक्तकेवलग्रहशांतिप्रयोगः ॥ आचमनं । प्राणा० । पवित्रधा० । शांतिपाठः । देशकालसं० । संकल्पः । मम कर्मणां अविघ्नफलसिद्धि संपदभि-वृद्धि आपदुपशांति वृष्टिमूलकसस्याद्यभिवृद्धि अपमृत्युजयेन दीर्घकालायुरभिवृद्धि अनवद्यशरीरत्वेन शारीरपुष्ट्यभिवृद्धि उत्पातोत्पत्तिनिरोधनिरसन ऐहिकामुष्मिकाभ्युदयार्थं अष्टमादिदुष्टस्थानोत्पत्स्यमानानिष्टनिरसन सदभीष्टोपलब्धये आदि-त्यादिनवग्रहदेवताप्रीतये याज्ञवल्क्योक्तां केवलां नवग्रहशांतिं करिष्ये । इति संकल्पः । गणपतिपूजनादि नांदीश्राद्धांतं । ऋत्विग्वरणं । कुंडे स्थंडिले वा पंचभूसंस्कारपूर्वकमग्निप्रणयनं । प्रतिग्रहं कुंडस्य पृथक्पक्षे तत्तद्ग्रहादिक्षु तत्तदाकृतीनि नवकुं-डानि स्थंडिलानि वा कृत्वा प्रतिकुंडमेकैक इति नवाचार्या ब्रह्माणश्च वरणीयाः । आचार्याश्च स्वस्वकुंडेषु पंचभूसंस्कार-पूर्वकं पृथक् पृथक् अग्निं प्रणयेयुः । नवकुंडीपक्षाभावान्नात्राचार्यकुंडं । एवं सर्वे आचार्याः स्वस्वकुंडेषु दक्षिणतो ब्रह्मासन-मास्तीर्येत्यादि होमेतिकर्तव्यतामपि पृथक्कुर्युः । एककुंडपक्षे आदित्यस्य प्राधान्यात् वर्तुलं कुंडं स्थंडिलं वा विधेयं । ततो वेद्यां ग्रहाधिवासनं ॥ तन्मंत्राः क्रमेण बोध्याः । १ ॐ आकृष्णेन० २ इमंदेवा० ३ अग्निर्मूर्द्धा० ४ उद्बुध्यस्व० ५ बृहस्पतेअति० ६ अन्नात्परिस्रुतो० ७ शन्नोदेवी० ८ कांडात्कांडात्प्ररोहंती० ९ केतुंकृण्वन्निति नव मंत्राः । पूजोपचारेषु विशेषः । तत्तद्वर्णानि

वासांसि चंदनानि पुष्पाणि माल्यानि नैवेद्यानि च । धूपस्तु गुग्गुलुरेक एवेति ॥ अनुक्तेर्न रौद्रः कलशः । तथा नाधिप्रत्यधिदेवादयः । तेषामयुतादिपरत्वात् ॥ ततो दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि नव चरून् श्रपयित्वा आज्यभागांतं । ततः क्रमेण ग्रहहोमः । तत्रादावर्कादिसमिद्धोमः । समिधस्तु मधुसर्पिर्भ्यां दध्ना पयसा वा अक्ताः । ततश्चरुहोमः । होममंत्राः प्रागुक्ता एव । तत्र पात्रासादने नव चरुस्थाल्यः । नवधा चर्वर्थास्तंडुलाश्चेति विशेषः । प्रतिद्रव्यं होमसंख्या । अष्टोत्तरशत १०८ मष्टाविंशति २८ वा । यथाक्रमं त्यागाः । ॐ इद६ सूर्याय १ ॐ इद६ सोमाय २ ॐ इदं भौमाय ३ ॐ इदं बुधाय । ४ ॐ इदं बृहस्पतये ५ इद६ शुक्राय ॐ इद६ शनैश्चराय ७ ॐ इद६ राहवे ८ ॐ इदं केतुभ्यः ९ इति त्यागाः ॥ ग्रहहोमांते उत्तरांगानि । पूजा स्विष्टं नवाहुत्यः । बलिप्रदानस्य तांत्रिकत्वाद्वैदिके कर्मण्यप्रवृत्तिः । होमसमृध्यर्थत्वात्पूर्णाहुतिर्वसोर्द्धारा च । श्रेयः संपाद्य दानं । आचार्यपूजनं । तत्तद्ग्रहप्रीतिप्रदानि दानानि । रौद्रकलशाभावादभिषेकाभावः । प्रतिमासु पूजनपक्षे तु तत्तत्कलशोदकैरभिषेकः । विसर्जनं । ब्राह्मणभोजनं । आशीर्ग्रहणं । इति शुक्लय० कांडप्रदीपे जननशांतिकांडे सर्वशांत्युपयोगित्वात् याज्ञवल्क्योक्ता केवला ग्रहशांतिः समाप्ता ॥ इतिशुक्लयजुःशाखीयकर्मकांडप्रदीपे जननशांतिककांडं परिसमाप्तम् ॥ इति शं ॥

इति श्रीगोदातटिनीतटनिकटवर्ति श्रीमन्नासिकमहाक्षेत्रवासिना "वारे" इत्युपनाम्ना मंत्रशास्त्रवित्पुरुषोत्तमप्रपौत्र ज्यो-

विंज्ञयरामपौत्र भट्टात्याजीसूरिपुत्र श्रीमज्जगद्गुरुशंकराचार्यदत्त "वैदिकतिलक" पदसंभूषितेन अण्णाशास्त्रिणा प्रणीतं शुक्लयजुःशाखीयकर्मकांडप्रदीपस्य परिशेषभूतं जननशांतिककांडं परिसमाप्तम् ॥

ग्रंथप्रणयणकालः ॥

श्रीगोदातटिनीस्थनासिकवसन्माध्यंदिनाम्नायविच्छ्रौतस्मार्तविधानकौशलमतिख्यार्षेयपाराशरः ॥
वारेइत्युपनामसत्कुलजनिर्जैरामपौत्रः सुधीः आत्याजीतनुजोऽतनोज्जनहितं शास्त्रीममण्णाभिधः ॥ १ ॥
प्रख्याते भुविभारते वसुशरव्यालेन्दुसंज्ञे शके १८५८ माघे मासि सिते दले शरतिथावर्केऽह्नि धात्रब्दगे ॥
शास्त्रार्थेन युतं प्रयोगसहितं विद्वत्प्रमोदास्पदं नूत्नं शांतिककांडमेतदरचि गृण्हंतु तत्सूरयः ॥ २ ॥

माघ शुक्ल वसंतपंचमी.
रविवार. शके १८५८.
ता. १५-२-१९३७ इ.

अण्णाशास्त्री वारे,
श्रीक्षेत्र नाशिक.

# विक्रेयानि संस्कृतपुस्तकानि.

उत्सर्जनोपाकरणविधिः—(ऋग्वेदीश्रावणी.) ।· ०/-

ऋग्वेदी नित्यविधिः. ।/- ०/-॥

देवीसहस्रनामावलिः. ०≡ ०।॥

नित्यकर्मपद्धतिः. ०= ०।॥

पञ्चायतनदेवानां पृथक् अष्टोत्तरशतनामावलिः. ०≡ ०।॥

पूजासमुच्चयः—(विषयाः १०५) ब्रह्मकर्मसमुच्चयपरिशिष्टरूपः। अस्मिन्वर्षप्रतिपदमारभ्य हुताशन्यन्तवर्तिविविधव्रताङ्गभूताः पुंभिः स्त्रीभिश्चावश्यं करणीयाः सप्रमाणाः पूजाः, तथा संक्रान्त्यादिनियतनिमित्ता दानधर्मसंकल्पाः, स्नानसंकल्पाः, विविधदेवानां सहस्राऽष्टोत्तरशतनामावलयश्च संगृहीताः सन्ति. १ ।·

प्रतिसांवत्सरिकश्राद्धप्रयोगः—राक्षोघ्नसूक्तश्राद्धसूक्तसहितः ।= ०/-

ब्रह्मकर्मसमुच्चयः हिरण्यकेशीयः (विषयाः ३८८) तैत्तिरीयशाखिब्राह्मणोपयुक्तः ३। ।॥=

विष्णुसहस्रनामावलिः. ।· ०।॥

शिवसहस्रनामावलिः—पत्रबद्धा. ।· ०।॥

सप्तशती—(चण्डीपाठः), देवीसूक्तं त्रीणि रहस्यानि च इत्येतैः सहिता; कौशेयबद्धा, स्थूलाक्षरा. १ ।·

सप्तशती—कौशेयपट्टवेष्टिता, मध्यमाक्षरा. ।॥· ०=

सप्तशती—कौशेयेन बद्धा सूक्ष्माक्षरा. अस्यां प्रयोगमन्त्रयन्त्रादिवर्धितविषयाः (४८) ।॥· ०=

| | | |
|---|---|---|
| **सूर्यसहस्रनामावलिः**—पत्रबद्धा. | ०।० | ०।८ |
| **हिरण्यकेशीयो नित्यविधिः**—(आपस्तम्बीयः) | ०।८ | ०।८ |
| **आश्वलायनगृह्यसूत्रम्**—( अध्यायचतुष्टयम् ). | ०।० | ०।८ |
| **ऋग्वेदमंत्रसंहिता**—अस्यां मंत्राः सूक्तानि च प्रायः प्रयोगक्रमेणैव संगृह्य प्रतिपृष्ठमधोभागे छन्दर्ष्यादिभिरलंकृतानि । प्रासंगिकानामैतरेयब्राह्मणखंडानामपि संग्रहः कृतः । | ०।॥= | ०।० |
| **ऋग्वेदसंहिता**—परिभाषा-ऋग्विधान-सर्वानुक्रम-स्वाहाकारविधिमंत्रकोशसहिता. | ३॥ | ०।८ |
| **ऐतरेयब्राह्मणम्.** | १ | ०।० |
| **ऐतरेयोपनिषत्** ( अरणानि आश्वलायनीयानि ) | ०।० | ०।८ |
| **पवमानपंचसूक्तानि.** | ०।० | ०।८ |
| **मंत्रसंहिता**—हिरण्यकेशीया. | ०।॥= | ०।८= |
| **रुद्रः**—हिरण्यकेशीयः. | ०।८= | ०।८ |
| **आचाररत्नम्**—( आह्निकग्रन्थः. ) | १ | ०।० |

## कुण्डार्कः.

**(१ मरीचिका, २ दीधिति, ३ पद्मिनी, ४ नौका, ५ मिताक्षरा, ६ सुप्रभाख्यटीकाषट्कोनोपेतः कुंडाकृतिसहितश्च ।)**

ग्रन्थोऽयं केवलं १५ श्लोकात्मको गंभीरार्थकोऽस्ति । अस्योपरि बह्व्यो व्याख्या उपलभ्यन्ते । तासु मुख्यानां षण्णामेव संग्रहः कृतः । तथैव कुण्डमण्डपानां कुण्डानां च आकृतयः स्पष्टप्रतिपत्त्यर्थं योजिताः सन्ति । तथाच यज्ञोपयुक्तानां विविधकोष्टकानां परिशिष्टानां च संग्रहः कृतः । अस्याध्ययनेन पंचकुंडीनवकुंड्यादीनां सम्यग् ज्ञानं भविष्यति। २ ०।॥०

**कुंडरत्नावलिः**—(सटीका)६४ कुंडाकृतिसहिता । १। ०।०

**ब्रह्मकर्मसमुच्चयः**—शुक्लयजुर्वेदी-यजुःशाखीयकर्मकाण्डप्रदीपः—विविधप्रयोगैस्तथा शास्त्रार्थैः परिपूर्णः । अस्मिन् रंगरंजितमंडलानि ६ ग्रहमंडलादीनि ३ प्रदत्तानि सन्ति । शुक्लयजुःशाखीयैरपूर्वोऽयमवश्यं संग्राह्यः । ४॥ १

इदं पुस्तकं सुप्रसिद्धनासिकक्षेत्रवासि-वारे इत्युपाह्वैर्विद्वद्वरैः अण्णाशास्त्रिभिः संपाद्य संस्कृतं तच्च पांडुरंग जावजी इत्येतैः मुंबय्यां स्वीये "निर्णयसागराख्य" मुद्रणालये मुद्रयित्वा प्रकाशितम् ।

प्रथमं संस्करणम् ।

शके १८५९, सन १९३७.

PUBLISHER:-Pandurang Jawaji,
PRINTER:-Ramchandra Yesu Shedge,
Nirnaya-sagar Press,
26-28, Kolbhat Street, Bombay.